M-2908

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| एकादशीमाहात्म्य | — | दर्शन | पूर्ण | — | 3/12 | 86 | संस्कृत | कागज | 12 | 42 | | |

श्रीगणेशायनमः॥ ॥अथकथा॥ ॥सूतउवाच॥ ॥एवंप्रीत्यापुराविप्राः श्रीकृष्णेनपरंव्रतम् कथितंतत्प्रयत्नेनयः कुर्याद्भुवि
मानवः १ भुक्त्वाभोगाननेकांस्तुविष्णुलोकंप्रयातिसः पार्थउवाच उपवासस्यनक्तस्यतथैवायाचितस्यच्यो २ किंपुण्यंकिं
विधानंहिब्रूहिसर्वजनार्दन श्रीकृष्णउ० हेमंतेचैवसंप्राप्तेमासिमार्गशिरेशुभे ३ शुक्लपक्षेतथापार्थएकादश्यामुपोष्यच दशम्यां
चैवयत्किंचित्कुर्यात्सुदृढव्रतम् ४ नक्तंचतद्दिनेकृत्वादशम्यांदंतधावनम् दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे ५ तत्रनक्तं
विजानीयान्ननक्तंनिशिभोजनम् ५ ततःप्रभातसमयेसंकल्प्यनियमांश्चरेत् मध्यान्हेचतथापार्थशुचिःस्नातःसमाहितः ६ नद्यां
तडागेवाप्यांवात्युत्तममध्यमंत्वधः क्रमाज्ज्ञेयंतथाकूपेतदभावेप्रशस्यते ७ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे मृत्तिकेहर
मेपापंयन्मयापूर्वसंचितम् ८ त्वयाहृतेनपापेनगच्छामिपरमांगतिम् अनेनमृत्तिकास्नानंविदधातुव्रतीनरः ९ नालपेत्पति
तैश्चोरैस्तथापाखंडिभिःसह मिथ्यापवादिनोदेववेदब्राह्मणनिंदकान् १० अन्यांश्चैवदुराचारानगम्यागामिनस्तथा परद्रव्यापहर्तॄंश्च
देवद्रव्यापहारिणः ११ नसंभाषेतदृष्ट्वापिभास्करंचावलोकयेत् ततोगोविंदमभ्यर्च्यनैवेद्यादिभिरादरात् १२ दीपंदद्याद्गृहेचैवभक्तियु
क्तेनचेतसा तद्दिनेवर्जयेत्पार्थनिंदामैथुनमेवच १३ गीतशास्त्रविनोदेनदिवारात्रीनयेद्व्रती रात्रौजागरणंकृत्वाभक्तियुक्तेनचेत
सा १४ विप्रेभ्योदक्षिणांदत्वाप्रणिपत्यक्षमापयेत् यथाशुक्लातथाकृष्णासान्याविधर्मतत्परैः १५ एकादश्योर्द्वयोराजन्वि
भेदेनैवकारयेत् एवंहिकुरुतेयस्तुशृणुतस्यापियत्फलम् १६ शंखोद्धारेनरःस्नात्वादृष्ट्वादेवंगदाधरं एकादश्युपवासस्यक

लांनार्हंतिषोडशीम् १७ व्यतीपातेचदानस्यलक्षमेकंफलंस्मृतम् संक्रांतिषुचतुर्लक्षंयोददातिधनंजय १८ कुरुक्षेत्रेचयत्पुण्यंग्रहणे
द्रसूर्ययोः तत्सर्वंलभतेयस्तुह्येकादश्यामुपोषितः १९ अश्वमेधस्ययज्ञस्यकरणाद्यत्फलंलभेत् ततः शतगुणंपुण्यमेकादश्युप
वासतः २० तपस्विनोगृहेनित्यंलक्षंयस्यचभुंजते षष्ठिवर्षसहस्राणितस्यपुण्यंचयद्भवेत् २१ एकादश्युपवासेनफलंप्राप्नोति
मानवः गोसहस्रेचयत्पुण्यंदत्तेवेदांतपारगे २२ तस्मात्पुण्यंदशगुणमेकादश्युपवासिनाम् नित्यंचभुंजतेयस्यदशचैवद्विजोत्तमाः
२३ भवेत्तद्दशगुणंभोजनेब्रम्हचारिणः एतत्सहस्रभूदानेकन्यादानेततःस्मृतम् २४ तस्माद्दशगुणंप्रोक्तंविद्यादानेतथैवच विद्या
द्दशगुणंचान्नंयोददातिबुभुक्षिते २५ अन्नदानसमंदानंनभूतंनभविष्यति तृप्तिमायातिकौंतेयस्वर्गस्थाःपितृदेवताः २६ एकादश्या-
व्रतस्यापिपुण्यसंख्यानविद्यते एतत्पुण्यप्रभावंचयत्सुरैरपिदुर्लभम् २७ नक्तस्यार्धफलंतस्यएकभुक्तस्यसत्तम एकभुक्तंचन
क्तंचउपवासस्तथैवच २८ एतेष्वन्यतमंवापिव्रतंकुर्याद्धरेर्दिने तावद्गर्जंतितीर्थानिदानानिनियमापमाः २९ एकादशीनसंप्रा
प्तायावत्तावन्मखाअपि तस्मादेकादशीसर्वैरुपोष्याभवभीरुभिः ३० ननखेनापिबेत्तोयंनहन्यान्मत्स्यसूकरान् एकादश्यांनभुंजीत
यन्मांत्वंपृच्छसेर्जुन ३१ एतत्तेकथितंसर्वंव्रतानामुत्तमंव्रतम् एकादशीसमंनास्तिक्रतुर्वायज्ञसहस्रकम् ३२ अर्जुनउवाच उ
क्तात्वयाकथंदेवपुण्येयंसर्वतस्थितिः सर्वेभ्योपिपवित्रेयमुक्ताह्येकादशीतिथिः ३३ श्रीकृष्णउवाच पुराकृतयुगेपार्थमरु
नामाहिदानवः अत्यद्भुतोमहारौद्रःसर्वदेवभयंकरः ३४ इंद्रोविनिर्जितस्तेन अत्युग्रेणचपांडव इंद्रेणकथितःसर्ववृत्तांतः

शंकरायवै ३५ सर्वैलोकपरिभ्रष्टाविचरामोमहीतले उपायंब्रूहिमेदेवअमराणांतुकागतिः ३६ ईश्वरउवाच देवराजसुरश्रेष्ठय
त्रास्तिगरुडध्वजः शरण्यश्चजगंनाथःपरित्राणपरायणः ३७ तत्रगच्छामहेसर्वेसनःकार्यंविधास्यति ईशस्यवचनंश्रुत्वादेव
राजोमहामनाः ३८ पुरस्कृत्यमहादेवंसगणंसमरुद्गणम् यत्रदेवोजगन्नाथःप्रसुप्तोहिजनार्दनः ३९ जलमध्येप्रसुप्तंतु
दृष्ट्वादेवंजगत्पतिम् कृतांजलिपुटोभूत्वारुद्रःस्तोत्रमुदीरयत् ४० ओंनमोदेवदेवायदेवदेवैःसुवंदित दैत्यारेपुंडरीकाक्ष
त्राहिनोमधुसूदन ४१ दैत्यभीताइमेदेवामयासहसमागताः शरणंत्वांजगन्नाथत्वंकर्तात्वंचकारकः ४२ त्वंमातासर्वलोकानांत्व
मेवजगतःपिता त्वंस्थितिस्त्वंतथोत्पत्तिस्त्वंचसंहारकारकः ४३ सहायस्त्वंचदेवानांत्वंचशांतिकरःप्रभो त्वंधरात्वमाका
शःसर्वविश्वोपकारकः ४४ भवस्त्वंचस्वयंब्रम्हात्रैलोक्यप्रतिपालकः त्वंरविस्त्वंशशांकश्च त्वंचदेवोहुताशनः ४५
हव्यंहोमोहुतस्त्वंचमंत्रतंत्रर्त्विजोजपः यजमानश्चयज्ञस्त्वंफलभोक्तात्वमीश्वरः ४६ नत्वयारहितंकिंचित्त्रैलोक्येसचराचरे
भगवन्देवदेवेशशरणागतवत्सल ४७ त्राहित्राहिसमायोगिन्भीतानांशरणंभव दानवैर्निर्जितादेवाःसर्वेभ्रष्टाःकृताविभो
४८ स्थानभ्रष्टाजगन्नाथविचरंतिमहीतले रुद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ४९ श्रीकृष्णउ० कोसौदैत्योमहामायोदेवाये
नविवर्जिताः किंस्थानंतस्यकिंनामकिंबलंकस्तदाश्रयः ५० एतत्सर्वंसमाचक्ष्वसघवन्निर्भयोभव इंद्रउवाच भगवन्देवदेवेशभ
क्तानुग्रहकारक ५१ दैत्यःपूर्वंमहानासीन्नाडीजंघइतिस्मृतः ब्रम्हवंशसमुद्भूतोमहोग्रःसुरसूदनः ५२ तस्यपुत्रोनिविरव्यातो

मरुनामामहासुरः तस्यचंद्रवतीनामनगरीनगरीयसी ५३ तस्यावसन्सदुष्टात्माविश्वंनिर्जित्यवीर्यवान् सुरान्स्ववशमानिन्ये
निराकृत्यत्रिविष्टपात् ५४ इंद्राग्नियमवाय्वीशसोमनिर्ऋतिपाशिनाम् पदेषुस्वयमेवासीत्सूर्योभूत्वातपत्यपि ५५ पर्ज
न्यःस्वयमेवासीदेवंसर्वाश्चदेवताः जहितंदानवंविष्णोसुराणांजयमावह ५६ तस्यतद्वचनंश्रुत्वाकोपाविष्टोजनार्दनः उ
वाचशत्रुंदेवेंद्रहनिष्येतंमहाबलम् ५७ प्रयातुसहिताःसर्वेचंद्रवत्यांमहाबलाः इत्युक्त्वाप्रययुःसर्वेपुरस्कृत्यहरिंसुराः ५८
हृष्टादेवास्तुदैत्येंद्रोगर्जमानस्तुदानवैः असंख्यातसहस्रैस्तुदिव्यप्रहरणायुधैः ५९ हन्यमानास्तदादेवाअसुरैर्बाहुशालिभिःसं
ग्रामंतेसमुत्सृज्यपलायंतेदिशोदश ६० ततोदृष्ट्वाहृषीकेशःसंग्रामेसमुपस्थितम् अन्वधावन्नभिक्रुद्धाविविधायुधधारिणः ६१
अथतानद्भुतान्दृष्ट्वाशंखचक्रगदाधरः विव्याधसर्वगात्रेषुशरैराशीविषोपमैः ६२ तेनाहतास्तेशतशोदानवानिधनंगताः एकांगोदान
वःस्थित्वायुयुध्यमानोमुहुर्मुहुः ६३ तस्योपरिहृषीकेशोयद्यदायुधमुत्सृजत् पुष्पवत्तत्समभ्येतिकुंठितंतस्यतेजसा ६४ शस्त्रा
स्त्रैर्विध्यमानोपियदाजेतुंनशक्यते युयोधचतदाकृत्वाबाहुभिःपरिघोपमैः ६५ बाहुयुद्धंकृतंतेनदिव्यवर्षसहस्रकं तेनश्रांतःसभग-
वान्गतोबदरिकाश्रमम् ६६ तत्रहैमवतीनाम्नीगुहापरमशोभना तांप्रविश्यमहायोगीशयनार्थंजगत्पतिः ६७ योजनद्वादशायामा ए
कद्वाराधनंजय अहंतत्रप्रसुप्तोस्मिभयभीतोनसंशयः ६८ महायुद्धेनतेनैवश्रांतोहंपांडुनंदन दानवःपृष्ठतोलग्नःप्रविवेशसः
तांगुहाम् ६९ प्रसुप्तंमांतदादृष्ट्वाचिंतयद्दानवोहृदि हरिमेनंहरिष्येहंदानवानांक्षयावहम् ७० एवंसुदुर्मतिस्तस्यव्यवसायंव्यवस्यन्च स

मुद्भूताममांगेभ्यः कन्यैकाचमहाप्रभा ७१ दिव्यप्रहरणादेवीयुद्धायसमुपस्थिता ईक्षितादानवेंद्रेणमरुणापांडुनंदन ७२ युद्धंसमा
हितंतंमस्त्रियातत्रभयान्वितम् तेनायुद्धतसानित्यंतांदृष्ट्वाविस्मयंगतः ७३ केनेयंनिर्मितारौद्राअत्युग्राशनिपातिनी इत्युक्त्वादान
वेंद्रोसौयुयुधेकन्ययातया ७४ ततस्तयामहादेव्यात्वरयादानवोबली छित्वासर्वाणिशस्त्राणिक्षणेनविरथःकृतः ७५ बाहुप्रहर
णोपेतोधावमानोमहाबलात् तलेनाहत्यत्हृदये तयादेव्यानिपातितः ७६ पुनरुत्थायसोधावत्कन्यांहननकांक्षया दानवा
पुनरायांतंरोषेणाहत्यतच्छिरः ७७ क्षणान्निपातयामाससभूमौतच्चसमुज्ज्वलत् दैत्यः कृतशिराःसोथययौवैवस्वतालयम् ७८
शेषाभयार्दितादीनाःपातालंविविशुर्द्विषः ततःसमुत्थितोदेवःपुरोदृष्ट्वासुरंहतम् ७९ कन्यांपुरस्थितांचापिकृतांजलिपुटां
नताम् विस्मयोत्फुल्लनयनःप्रोवाचजगतांपतिः ८० केनायंविहतःसख्योदानवोदुष्टमानसः येनदेवाःसगंधर्वाःसेंद्राश्चसमरु
द्गणाः ८१ सनागाःसहलोकेशालीलयैवविनिर्जिताः येनाहंनिर्जितोभूत्वाभीतःसुप्तोगुहामिमाम् ८२ केनकारुण्यभावेनरक्षि
तोहंपलायितः कन्योऽवाच मयाविनिहतोदैत्यस्त्वद्दंशोद्भूतयाप्रभो ८३ दृष्ट्वासुप्तंहरेत्वांतुयतोहंतुंसमुद्यतः त्रैलोक्यकंट
कस्येत्थंव्यवसायंप्रबुध्यच ८४ हतोमयादुरात्मासौदेवतानिर्भयाःकृताः नवैवाहंमहाशक्तिःसर्वशत्रुभयंकरी ८५ त्रै
लोक्यरक्षणार्थायहतोलोकभयंकरः निहतंदानवंदृष्ट्वाकिमाश्चर्यंवदप्रभो ८६ श्रीभगवानुवाच निहतेदानवेंद्रेस्मिन्संतु
ष्टोहंतवानघे हृष्टाःपुष्टाश्चवैदेवाआनंदःसमजायत ८७ आनंदस्त्रिषुलोकेषुदेवानांयस्त्वयाकृतः प्रसन्नोस्म्यनघेतुभ्यंवरंवरयसुव्रते

८८ ददामितंनसंदेहोयत्सुरैरपिदुर्लभम् कन्योवाच यदितुष्टोसिमेदेवयदिदेयोवरोमम ८९ तारयेहंमहापापादुपवासपरंनरं
उपवासस्ययत्पुण्यंतस्यार्धंनक्तभोजने ९० तदर्धंचभवेत्तस्यएकभुक्तंकरोतियः यःकरोतिव्रतंभक्त्यादिनेममजितेंद्रियः ९१ सगत्वा
वैष्णवस्थानंकल्पकोटिशतानिच भुंजानोविविधान्भोगानुपवासीजितेंद्रियः ९२ भगवंस्त्वत्प्रसादेनभवत्वेषवरोमम उपवासंच
नक्तंचएकभुक्तंकरोतियः तस्यसर्धंचवित्तंचमोक्षंदेहिजनार्दन ९३ श्रीभगवानु॰ यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति ममभक्ता
श्चयेलोकास्तवभक्ताश्चयेनराः ९४ त्रिषुलोकेषुविख्याताः प्राप्स्यंतिममसन्निधिम् एकादश्यांसमुत्पन्नामममशक्तिःपरायतः
९५ अतएकादशीत्येवंतवनामभविष्यति दग्ध्वापापानिसर्वाणिदास्यामिपदमव्ययम् ९६ तृतीयाचाष्टमीचैवनवमीचचतुर्दशी एका
दशीविशेषेणतिथयोमेमहाप्रियाः ९७ सर्वतीर्थाधिकंपुण्यंसर्वदानाधिकंफलम् सर्वव्रताधिकंचैवसत्यंसत्यंवदामिते ९८ एवंद-
त्वावरंतस्यास्तत्रैवांतरधीयत हृष्टातुष्टातुसाजातातदाएकादशीतिथिः ९९ इमामेकादशींपार्थकरिष्यंतिनरास्तुये तेषांशत्रून्हनिष्या
मिदास्यामिपरमांगतिम् १०० अन्येपियेकरिष्यंतिएकादश्यांमहाव्रतम् हरामितेषांविघ्नांश्चसर्वसिद्धिंददामिच १ एवमुक्तासमुत्पत्तिरेका
दश्याःपृथासुत इयमेकादशीनित्यासर्वपापक्षयकरी २ एकैवचमहापुण्यासर्वपापनिषूदनी उदितासर्वलोकेषुसर्वसिद्धिकरीति-
थिः ३ शुक्लावाप्यथवाकृष्णाइतिभेदंनकारयेत् कर्तव्येउभयेपार्थनतल्पाद्वादशीतिथिः ४ अंतरंनैवकर्तव्यंसमस्तैर्व्रतकारि
भिः तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि ५ एकादशीतुसंपूर्णप्रभातेघटिकायदि सातिथिःपरिहर्तव्याउपोष्याद्वादशीतदा ६

एवंविधामयाप्रोक्तापक्षयोरुभयोरपि उपवासंप्रकुर्वंतिएकादश्यांनराश्चये ७ तेयांतिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्ते
मानवालोकेविष्णुभक्तिपरायणाः८ एकादश्यास्तुमाहात्म्यंसर्वलोकेषुयः पठेत् अश्वमेधस्ययत्पुण्यंतदाप्नोतिनसंशयः ९ एकादश्यांनि
राहारः स्थित्वाचाहंपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत १० इत्युच्चार्यततोविद्वान् पुष्पांजलिमथार्पयेत् अष्टाक्षरेणमंत्रे
णत्रिर्जप्तेनाभिमंत्रितम् ११ उपवासफलप्रेप्सुःपिबेत्पात्रगतंजलम् दिवानिद्रापरान्नंचपुनर्भोजनमैथुने १२ क्षौद्रंकांस्यामिषंतैलंद्वाद
श्यामष्टवर्जयेत् असंभाष्यंहिसंभाष्यभक्षयेत्तुलसीदलम् १३ अमलक्याःफलंवापिपारणेभक्ष्यशुध्यति आमध्यान्हाच्चराजेंद्रद्वा
दश्यामरुणोदये १४ स्नानार्चनक्रियाकार्याःदानहोमादिसंयुताः संकटेविषमेप्राप्तेद्वादश्याःपारणंकथम् १५ अद्भिस्तुपारणंकुर्या
त्पुनर्भुक्तंनदोषकृत् यः शृणोतिदिवारात्रौनरोविष्णुपरायणः १६ तद्भक्तसुरवनिष्पन्नांकथांविष्णोःसुमंगलाम् कल्पकोटिसमा
युक्तोविष्णुलोकेमहीयते १७ एकादश्याश्चमाहात्म्यंपादमेकंशृणोतियः ब्रम्हहत्यादिकंपापंनश्यतेनात्रसंशयः १८ विष्णुधर्मसमं
नास्तिव्रतंनामसनातनम् १९ इतिश्रीभविष्योत्तरपु॰श्रीकृष्णार्जुनसंवादेमार्गशीर्षकृष्णैकादशीमाहात्म्यंसंपूर्णम् ७ अथमार्गशी
र्षशुक्लैकादशीकथा ७ युधिष्ठिरउवाच वंदेविष्णुंप्रभुंसाक्षाल्लोकत्रयसुखप्रदम् विश्वेशंविश्वकर्तारंपुराणंपुरुषोत्तमम् १ पृच्छा
मिदेवदेवेशसंशयोस्तिमहान्मम लोकानांतुहितार्थायपापानांचक्षयायच २ मार्गशीर्षेसितेपक्षेकिंनामैकादशीभवेत् कीदृशस्याविधि
धिस्तस्याःकोदेवस्तत्रपूज्यते ३ एतदाचक्ष्वमेस्वामिन्विस्तरेणयथातथम् श्रीभगवानुवाच सम्यक्पृष्टंत्वयाराजन्साधुत्तेविपुलंयशः

४ कथयिष्यामिराजेंद्रहरिवासरमुत्तमम् उत्पन्नासासितेपक्षेद्वादशीममवल्लभा ५ मार्गशीर्षसमुत्पन्नाममदेहान्नराधिप मुरस्यचव
धार्थायप्रख्याताममवल्लभा ६ कथितासामयाचैवत्वदग्रेराजसत्तम पूर्वमेकादशीराजनूत्रैलोक्यसचराचरे ७ मार्गशीर्षसितेपक्षे
चोत्पत्तिरितिनामतः अतःपरंप्रवक्ष्यामिमार्गशीर्षसितातथा ८ तस्याःश्रवणमात्रेणवाजपेयफलंलभेत् मोक्षानाम्नीतिविख्याता
सर्वपापहरापरा ९ देवंदामोदरंतस्यांपूजयेच्चप्रयत्नतः तत्रापिपूजनंचैवगीतनृत्यैःसुमंगलैः १० शृणुराजेंद्रवक्ष्यामिकथांपौराणि
कींशुभाम् अधोगतिगतायेवैपितृमातृसुतादयः ११ अस्याःपुण्यप्रभावेनस्वर्गंयातिनसंशयः एतस्मात्कारणाद्राजन्महि
मानंशृणुष्वतम् १२ पुरावैनगरेरम्येगोकुलेन्यवसन्नृपः वैखानसेतिराजर्षिःपुत्रवत्पालयन्प्रजाः १३ द्विजाश्चन्यवसंस्तत्रचतु
र्वेदपरायणाः एवंसराज्यंकुर्वाणोरात्रौतुस्वप्नमध्यतः १४ ददर्शजनकंस्वंतुअधोयोनिगतंनृपः एवंदृष्ट्वातुतंतत्रविस्मयोत्फुल्ल
लोचनः १५ कथयामासवृत्तांतंद्विजाग्रेस्वप्नसंभवम् राजोवाच मयातुस्वपिताद्दृष्टोनरकेपतितोद्विजाः तारयस्वेतिमांतातमधो
योनिगतंसुत १६ इतिब्रुवाणःसतदामयादृष्टःपितास्वयम् तदाप्रभृतिभोविप्रानाहंशर्मलभाम्यहो १७ एतद्राज्यंममहद्दुःसह्यमसु
खंतथा अश्वागजारथाश्चैवनमांरोचंतिसर्वथा १८ नकोशोपिसुखायेतिनकिंचित्सुखदंमम नदारानसुतामह्यंरोचंतिद्विजस-
त्तमाः १९ किंकरोमिक्वगच्छामिशरीरंमेतुदह्यते दानंव्रतंतपोयोगोयेनैवममपूर्वजाः २० मोक्षमायांतिविप्रेंद्रास्तदेवकथयंतुमे
किंतेनजीवतालोकेसुपुत्रेणबलीयसा २१ पितातुयस्यनरकेतस्यजन्मनिरर्थकम् ब्राम्हणाऊचुः पर्वतस्यमुनेरत्रआश्रमोनिकटेनृप

२२ गम्यतांराजशार्दूल भूतंभव्यंविजानतः तेषांश्रुत्वाततोवाक्यंवैरवानोराजसत्तमः २३ जगामतत्रयत्रासौआश्रमेपर्वतोमुनिः ब्राम्ह
णैर्वेष्टितःशांतैः प्रजाभिश्चसमंततः २४ आश्रमोविपुलस्तस्यमुनिभिःसन्निषेवितः ऋग्वेदिभिर्यजुर्षैश्चसामाथर्वणकोविदैः २५
वेष्टितोमुनिभिस्तत्रद्वितीयइवपद्मजः दृष्ट्वातंमुनिशार्दूलंराजावैरवानसत्तदा २६ जगामचावनिंमूर्ध्नादंडवत्प्रणनामच पप्रच्छकु
शलंतस्यसप्तस्वंगेष्वसौमुनिः २७ राज्यंनिःकंटकत्वंचराज्यंसौख्यसमन्वितम् राजोवाच प्रसादात्कुशलंविप्रअंगेषुममसप्तसु २८
विभवेष्वनुकूलेषुकश्चिद्विघ्नउपस्थितः एतन्मेसंशयंब्रम्हन्प्रष्टुंत्वांचसमागतः २९ एवंश्रुत्वानृपवचःपर्वतोमुनिसत्तमः ध्यानस्तिमि
तनेत्रोसौ भूतंभव्यंविचिंतयन् ३० मुहूर्तमेकंध्यात्वाचप्रत्युवाचनृपोत्तमम् मुनिरुवाच जानेहंतवराजेंद्रपितुःपापंविकर्मणः ३१ पू
र्वजन्मनितेपित्रासपत्नीकृततद्वेषतः कामासक्तेनचैकत्रऋतुभंगःकृतःस्त्रियः ३२ त्राहिदेहीतिजल्पत्याऋतुदानंनराधिप तेनवैतवपित्रानु
नदत्तोऋतुराग्रहात् ३३ कर्मणातेनसततंनरकेपतितोव्ययम् राजोवाच केनवैव्रतदानेनमोक्षस्तस्यभवेन्मुने ३४ निरयात्पापसंयुक्ता
त्तन्ममाचक्ष्वपृच्छतः मुनिरुवाच मार्गशीर्षेसितेपक्षेमोक्षानाम्नीहरेस्तिथिः ३५ सर्वैस्तुतद्व्रतंकृत्वापित्रेपुण्यंप्रदीयताम् तस्याःपु
ण्यप्रभावेनमोक्षस्तस्यभविष्यति ३६ मुनेर्वाक्यंततःश्रुत्वानृपःस्वगृहमागतः आग्रहायणिकेकृष्णेशल्याभासाभरतसत्तम ३७ अंतःपु
रचरैःसर्वैःपुत्रैर्दारैस्तथानृपः व्रतंकृत्वाविधानेनपुण्यंदत्वानृपायतत् ३८ तस्मिन्दत्तेतदापुण्येपुष्पवृष्टिरभूद्दिवः वैरवानसपि
तातेनगतःस्वर्गंस्तुतोगणैः ३९ राजानमंतरिक्षाच्चश्लक्ष्णांगिरमभाषत स्वस्त्यस्तुतेपुत्रसदेत्युक्त्वासत्रीदिवंगतः ४० एवंयःकुरु

तेराजन्मोक्षमेकादशीमिमाम् तस्यपापंक्षयंयातिमृतोमोक्षमवाप्नुयात् ४१ नान्यापरतराकाचिन्मोक्षदाविमलाशुभा पुण्यसंख्यांतु
राजेंद्रनजानेहंतुयैःकृता ४२ पठणाच्छ्रवणात्तस्यावाजपेयफलंलभेत् चिंतामणिसमाह्येषास्वर्गमोक्षप्रदायिनी ४३ इतिश्रीब्रम्हांडपुरा॰
मार्गशीर्षशुक्लैकादश्यामोक्षानाम्न्यामाहात्म्यंसमाप्तम् अथपौषकृष्णैकादशीक॰ युधिष्ठिरउ॰ पौषस्यकृष्णापक्षेतुद्वादशीयाभवे
त्प्रभो किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते १ एतदाचक्ष्वमेस्वामिन्विस्तरेणजनार्दन श्रीकृष्णउ॰ कथयिष्यामिराजेंद्रभवतः
स्नेहकारणात् २ तथातुष्टिर्नमेराजन्क्रतुभिश्चाप्तदक्षिणैः यथातुष्टिर्भवेन्मह्यमेकादश्याव्रतेनवै ३ तस्मात्सर्वप्रयत्नेनकर्तव्यो
हरिवासरः पौषस्यकृष्णापक्षेतुद्वादशीयाभवेन्नृप ४ तस्याश्चैवचमाहात्म्यंशृणुष्वैकाग्रमानसः गदितायाश्चवैराजन्एकादश्योभ
वंतिहि ५ तासामपिहिसर्वासांविकल्पंनैवकारयेत् तथापित्वेकादश्याश्चशृणुराजन्कथानकम् ६ अतःपरंप्रवक्ष्यामिपौषस्यैकाद-
शीतव लोकानांचहितार्थायकथयिष्येविधिंतव ७ पौषस्यकृष्णपक्षेयासफलानामनामतः नारायणोधिदेवोस्याःपूजयेत्तंप्रय
त्नतः ८ पूर्णेनविधिनाराजन्कर्तव्यैकादशीजनैः नागानांचयथाशेषःपक्षिणांगरुडोयथा ९ यथाश्वमेधोयज्ञानांनदीनांजान्ह
वीतथा व्रतानांचतथाराजन्प्रवरैकादशीतिथिः १० तेजसाभरतश्रेष्ठममपूज्याश्चसर्वशः हरिवासरसंसक्तावर्ततेयेजनाभृ
शम् ११ सुफलानाममयाप्रोक्तातस्याःपूजाविधिंशृणु फलैर्मांपूजयेत्तत्रकालदेशोद्भवैःशुभैः १२ नारीकेलफलैःक्रमुकैस्त
थावैबीजपूरकैः जंबीरैर्दाडिमैश्चैवतथापूगीपलैरपि १३ लवंगैर्विविधैश्चान्यैस्तथाचाम्रफलादिभिः पूजयेद्देवदेवेशंधूपै-

दीपैर्यथाक्रमम् १४ सफलायांदीपदानंविशेषेणप्रकीर्तितम् रात्रौजागरणंतत्रकर्तव्यंचप्रयत्नतः १५ यावदुन्मीलयेन्नेत्रंतावज्जाग
र्तियोनिशि एकाग्रमानसोभूत्वातस्यपुण्यंशृणुष्वतत् १६ तत्समोनास्तिवैयज्ञस्तीर्थंतत्सदृशंनहि तत्समंनव्रतंकिंचिदिहलोकेनरा-
धिप १६ पंचवर्षसहस्राणितपस्तप्त्वाचयत्फलम् तत्फलंसमवाप्नोतिसफलायाव्रतेनवै १८ श्रूयतांराजशार्दूलसफलायाःकथान
कम् चंपावतीतिविख्यातापुरीमाहिष्मतस्यच १९ माहिष्मतस्यराजर्षेश्चत्वारश्चाभवन्सुताः तेषांमध्येतुयोज्येष्ठःसमहापापसंयुतः
२० परदाराभिगामीचवेश्यासंगरतःसदा पितुर्द्रव्यंसपापिष्ठोगमयामाससर्वशः २१ असद्वृत्तिरतोनित्यंदेवताद्विजनिंदकः वैष्ण
वानांचदेवानांनित्यंनिंदारतःसवै २२ ईदृग्विधंतदादृष्ट्वापुत्रंमाहिष्मतोनृपः लुंपकोनामनाम्नेतिकृतवानत्यमर्षितः २३ राज्यान्नि
ष्काशितस्तेनपित्राचैवापिबंधुभिः परिवारजनैःसर्वैस्त्यक्तोराज्ञोभयादिति २४ लुंपकोपितदात्यक्तश्चिंतयामासत्वेकलः मया
त्रकिंमकर्तव्यंत्यक्तः पित्राचबांधवैः २५ इतिचिंतापरोभूत्वामतिंपापेतदाकरोत् मयातुगमनंकार्यंवनेत्यक्त्वापुरंपितुः २६ तस्माद्वना
त्पितुःसर्वंव्यापाधिष्येपुरंनिशि दिवावनेचरिष्यामिरात्रावपिपितुःपरम् २७ इत्येवंसमतिंकृत्वालुंपकोदैवपातितः निर्जगामपुत्त-
स्मात्गतोसौगहनंवनम् २८ जीवघातकरोनित्यंनित्यस्तेयपरायणः सर्वंचनगरंतेनमुषितंपापकर्मणा २९ गृहीतश्चपरित्यक्तोराज्ञोमाहि
ष्मतेर्भयात् जन्मांतरीयपापेनराज्यभ्रष्टःसपापकृत् ३० आमिषाभिरतोनित्यंनित्यंवैफलभक्षकः आश्रमस्तस्यदुष्टस्यवासुदेवस्य
संमतः ३१ अश्वत्थोवर्ततेतत्रजीर्णोबहुकुलवार्षिकः देवत्ववस्यवृक्षस्यवर्ततेतद्वनेमहत् ३२ तत्रैवनिवसंश्चासौलुंपकःपापबुद्धिमान् एककालकमे

णैववसंतस्तस्यपापिनः ३३ दुष्कर्मनिरतस्यास्यकुर्वतःकर्मनिंदितम् पौषस्यकृष्णपक्षेतुपूर्वाण्हेसफलादिने ३४ दशमीदिवसेराजन्नि
शायांशीतपीडितः लुंपकोवस्त्रहीनोवैनिश्चेष्टोह्यभवत्तदा ३५ पीड्यमानस्तुशीतेनअश्वत्थस्यसमीपगः ननिद्रांनसुखंतस्यगतप्रा
णइवाभवत् ३६ पीडयन्दशनैर्दंतानेवंचगमितानिशा भानूदयेपितस्याथनसंज्ञासमजायत ३७ लुंपकोगतसंज्ञस्तुसफलादिवसे
तदा मध्यान्हसमयेप्राप्तेसंज्ञांलेभेसलुंपकः ३८ प्राप्तसंज्ञोमुहूर्तेनचोत्थितोसौतदासनात् प्रस्खलंश्चपदन्यासैःपंगुवच्चलितोमुहुः
३९ वनमध्येगतस्तत्रक्षुत्तृषापीडितोभवत् नशक्तिर्जीवघातस्यलुंपकस्यदुरात्मनः ४० फलानिभूमौपतितान्याजहारसलुंपकः यावत्सचाग
तस्तत्रतावदस्तमगाद्रविः ४१ किंभविष्यतितातेतिविललापातिदुःखितः फलानितानिसर्वाणिवृक्षमूलेन्यवेदयत् ४२ प्रत्युवाचफलैरेभिःप्रीयतां
भगवान्हरिः उपविष्टोलुंपकश्चनिद्रांलेभेनवैनिशि ४३ तेनजागरणंजातंभगवान्मधुसूदनः फलानांपूजनंमेनेसफलायास्तथाव्रतम् ४४ कृतं
मेवंलुंपकेनत्वकस्माद्व्रतमुत्तमम् तेनव्रतप्रभावेनप्राप्तंराज्यमकंटकम् ४५ पुण्यांकुरोदयाद्राजन्यथाप्राप्तंतथाशृणु रवेरुदयवेलायांदिव्यो
श्वश्चाजगामह ४६ दिव्यवस्तुपरीवारोलुंपकस्यसमीपतः तस्थौसतुरगोराजन्वागुवाचाशरीरिणी ४७ प्राप्नुहित्वंनृपसुतस्वराज्यंहतकंटकम्
वासुदेवप्रसादेनसफलायाःप्रभावतः ४८ पितुःसमीपंगच्छत्वंभुंक्ष्वराज्यमकंटकम् तथेत्युक्त्वात्वसौतत्रदिव्यरूपधरोभवत् ४९ कृष्णेम
तिश्चतस्यासीत्परमावैष्णवीतथा दिव्याभरणशोभाढ्यस्तातंनत्वास्थितोगृहे ५० वैष्णवायततोदत्तंपित्राराज्यमकंटकम् कृतंराज्यंतुतेनैववर्षा
णिसुबहून्यपि ५१ हरिवासरसंलीनोविष्णुभक्तिरतःसदा मनोज्ञास्तस्यपुत्राःस्युर्दाराःकृष्णप्रसादतः ५२ ततःसर्वाधिकेराज्यप्राप्तेपुत्रं

निवेश्यच वनंगतः संयतात्माविष्णुभक्तिपरायणः ५३ साधयित्वातथात्मानंविष्णुलोकंजगामह गतः कृष्णस्यसान्निध्येयत्रगत्वानशोच
ति५४ एवंयेवैप्रकुर्वंतिसफलैकादशीव्रतम् इहलोकेयशःप्राप्यमोक्षंयास्यंत्यसंशयः५५ धन्यास्तेमानवालोकेसफलाव्रतकारिणः तस्मिन्
जन्मनितेमोक्षंलभंतेनात्रसंशयः५६ सफलायाश्चमाहात्म्यश्रवणाद्विशांपते राजसूयफलंप्राप्यवसेत्स्वर्गेचमानवः५७ इतिश्रीपौष
कृ० सफलानाम्न्यामाहात्म्यंसंपूर्णम् अथपौषशुक्लैकादशीकथा युधिष्ठिरउ० कथितावैत्वयाकृष्णसफलैकादशीशुभा कथयस्वप्र
सादेनशुक्लापौषस्ययाभवेत् १ किन्नामकोविधिस्तस्याः कोदेवस्तत्रपूज्यते कस्मैतुष्टोहृषीकेशस्त्वमेवपुरुषोत्तम २ श्रीकृष्णउवाच
शृणुराजन्प्रवक्ष्यामिशुक्लापौषस्ययाभवेत् तस्याविधिंमहाराजलोकानांचहितायवै ३ पूर्वेणविधिनाराजन्कर्तव्येषाप्रयत्नतः पुत्रदे
तिचनाम्नासौसर्वपापहरापरा ४ नारायणोधिदेवोस्याः कामदःसिद्धिदायकः नातःपरतराकाचित्त्रैलोक्येसचराचरे विद्यावंतंयशस्वंतं
करोतिचनरोहरिः ५ शृणुराजन्प्रवक्ष्यामिकथांपापहरांपराम् पुरीभद्रावतीनाम्नीराजातत्रसुकेतुमान् ६ तस्यराज्ञोथराज्ञीचशैब्यानाम्नी
तिविश्रुता पुत्रहीनेनराज्ञाचकालोनीतोमनोरथैः नैवात्मजंनृपोलेभेवंशकर्तारमेवच ७ तेनैवराज्ञाधर्मेणाचिंतितंबहुकालतः किंकरोमिक्व
गच्छामिसुतःप्राप्तिःकथंभवेत् ८ नराष्ट्रेनपुरेसौख्यंलेभेराजासुकेतुमान् शैब्ययाकांतयासार्द्धंप्रत्यहंदुःखिताभवत् ९ तावुभौदं
पतीनित्यंचिंताशोकपरायणौ पितरस्तुजलंदत्तंकवोष्णमुपभुंजते १० राज्ञः पश्चान्नपश्यामोयोस्मान्संतर्पयिष्यति इत्येवंसंस्मरं
तोस्यरंतोस्यपितरोदुःखितोभवत् ११ तेषांतद्दुःखमूलंचज्ञात्वाराजाप्यतप्यत नबांधवानमित्राणिनामात्याःसुहृदस्तथा १२ रोचंतेतस्य

भूपस्यनगजाश्वपदातयः नैराश्यंभूपतेस्तस्यमनस्येवमजायत१३ नरस्यपुत्रहीनस्यनास्तिवैजन्मनःफलम् अपुत्रस्यगृहंशून्यंतद्दद्यंदुः
खितंसदा१४ पितृदेवमनुष्याणांनानृणित्वंसुतंविना तस्मात्सर्वप्रयत्नेनसुतमुत्पादयेन्नरः १५ इहलोकेयशस्तेषांपरलोकेशुभागतिः ये
षांतुकर्मकर्तॄणांपुण्यंजन्मशतोद्भवम् १६ आयुरारोग्यसंपत्तिस्तेषांगेहेप्रवर्त्तते पुत्राः पौत्राश्चलोकाश्चभवेयुःपुण्यकर्मणाम् १७ पु
ण्यंविनानचप्राप्तिर्विष्णुभक्तिंविनातथा पुत्राणांसंपदांवापिविद्यायाश्चेतिमेमतिः१८ एवंचिंतयमानोसौराजाशर्मनलब्धवान् भत्स्वपे
चिंतयद्राजानिशीथेचिंतयत्तथा१९ ततश्चात्मविनाशंवैविचार्यार्थसुकेतुमान् आत्मघातेदुर्गतिंचचिंतयित्वातदानृपः २० दृष्ट्वात्मदेहंप्र
क्षीणमपुत्रत्वंतथैवच पुनर्विचार्यात्मबुद्ध्याह्यात्मनोहितकारणम् २१ अश्वारूढस्ततोराजाजगामगहनंवनम् पुरोहितादयःसर्वेनजानं
तिगतंनृपम् २२ गंभीरेविपिनेराजामृगपक्षिनिषेविते विचचारतदातस्मिन्वनवृक्षान्विलोकयन् २३ वटानश्वत्थबिल्वांश्चखर्जुरान्पनसांस्त
था बकुलांश्चसदापर्णान्तिंदुलांस्तिलकानपि२४ शालांस्तालांस्तमालांश्चददर्शसरलान्नृपः इंगुदीककुभांश्चैवश्लेष्मातकविभीतकान्
२५ शल्लकीकरमर्दांश्चपाटलान्खदिरानपि शाकांश्चैवपलाशांश्चशोभितान्ददृशेनृपः २६ मृगव्याघ्रवराहांश्चसिंहान्शाखामृगानपि
गवयान्कृष्णसारांश्चसृगालान्शशकानपि २७ वनमार्जारकान्क्रूरान्शल्लकांश्चमृगानपि ददर्शभुजगान्राजावल्मीकादभिनिः
सृतान् २८ तथावनगजान्मत्तान्कलभैःसहसंगतान् यूथपांश्चचतुर्दंतान्करिणीगणमध्यगान् २९ तान्दृष्ट्वाचिंतयामासत्वात्मनः
सगजान्नृपः तेषांसविचरन्मध्येराजाशोकमवापह ३० महदाश्चर्यसंयुक्तंददर्शविपिनंनृपः क्वचिच्छिवारुतंशृण्वन्नुलूकवि

रुतंतया ३१ तांस्तान्पक्षिगणान्पश्यन्बभ्रामवनमध्यगः एवंददर्शगहनंनृपोमध्यंगतेरवौ ३२ क्षुत्तृड्भ्यांपीडितोराजाइतश्चेतश्चधावति चिं
तयामासनृपतिः संशुष्कगलकंधरः ३३ मयातुकिंकृतंकर्मप्राप्तंदुःखंयदीदृशं मयादैवतोषितादेवायज्ञैः पूजाभिरेवच ३४ तथैवब्राह्मणादाने
स्तोषितामिष्टभोजनैः प्रजाश्चैवयथाकालंपुत्रवत्परिपालिताः ३५ कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंमहत् इतिचिंतापरोराजाजगामाथा
ग्रतोवनम् ३६ सुकृतस्यप्रभावेनसरोदृष्टंमनोरमम् मानसंस्पर्धमानंचपद्मिनीपरिशोभितं ३७ कारंडवैश्चक्रवाकैराजहंसैश्चनादितं मकरैर्ब
हुभिर्युक्तमन्यैर्जलचरैर्युतं ३८ समीपेसरसस्तत्रमुनीनामाश्रयान्बहून् ददर्शराजालक्ष्मीवान्निमित्तैःशुभशंसिभिः ३९ सव्यात्परतरंचक्षुः पास्फु
रच्चतथाकरः स्फुरितस्तस्यराज्ञश्चशंसितंशुभलक्षणम् ४० तस्यतीरेमुनीन्दृष्ट्वाकुर्वाणान्नैगमंजपम् अवतीर्यहयात्तस्मान्मुनीनामग्रतः
स्थितिः ४१ पृथक्पृथक्ववंदेसमुनींस्तान्शंसितव्रतान् कृतांजलिपुटोभूत्वादंडवच्चप्रणम्यसः ४२ हर्षेणमहताविष्टोबभूवनृपसत्तमः
तमूचुस्तेपिमुनयः प्रसन्नाःस्मोवयंतव ४३ कथयस्वाद्यवैराजन्यत्तेमनसिवर्तते राजोवाच केयूयमुग्रतपसः किमाख्याभवतामपि ४४
किमर्थमागतायूयंवदतुममतत्वतः मुनयऊचुः विश्वेदेवावयंराजन्स्नानार्थमिहचागताः ४५ माघोनिकटमायातएतस्मात्पंचमेहनि अद्य
त्वेकादशीराजन्पुत्रदानामनामतः ४६ पुत्रंददात्यसौशुक्लापुत्रदापुत्रमिच्छतां राजोवाच एषवैसंशयोमत्वंस्कृतस्योत्पादनेमहान् ४७
यदितुष्टाभवंतोमेपुत्रोवैदीयतांतदा मुनयऊचुः अस्मिन्नेवदिनेराजन्पुत्रदानामवर्तते ४८ एकादशीतिविख्याताक्रियतांव्रतमुत्तमम् आ
शीर्वादेनचास्माकंकेशवस्यप्रसादतः ४९ अवश्यंतवराजेंद्रपुत्रप्राप्तिर्भविष्यति इत्येवंवचनात्तेषांकृतंराज्ञाव्रतंशुभम् ५० द्वाद-

श्यांपारणं कृत्वा मुनीन्नत्वा पुनः पुनः आजगाम गृहं राजा राज्ञी गर्भं समादधौ ५१ मुनीनां वचनेनैव पुत्रदायाः प्रसादतः पुत्रो जातस्तथा
काले तेजस्वी पुण्यकर्मकृत् ५२ पितरं तोषयामास प्रजापालो बभूव सः एतस्मात्कारणाद्राजन्कर्तव्यं पुत्रदाव्रतम् ५३ लोकानां च हितार्थाय एतद्वाग्रे
कथितं मया एतद्व्रतं तु ये मर्त्याः कुर्वंति पुत्रदाभिदम् ५४ तेषां चैव भवेत्पुत्रोऽप्यवश्यं मोक्षभागिनाम् पठणाच्छ्रवणाद्राजन्नश्वमेधफलं भवे
त् ५५ इति श्रीभ॰ पु॰ पौषशुक्लैकादशी पुत्रदानाम्न्या माहात्म्यं संपूर्णम् अथ माघकृष्णैकादशीकथा दाल्भ्य उ॰ मर्त्यलोकं तु संप्राप्ताः
पापं कुर्वंति जंतवः ब्रम्हहत्यादिपापैश्च तथान्यैश्च विविधैर्युताः १ परद्रव्यापहाराश्च परव्यसनमोहिताः कथं नायांति नरकान् ब्रम्हंस्तद्ब्रूहि त
त्वतः २ अनायासेन भगवन्दानेनाल्पेन केनचित् पापं प्रशममायाति येन तद्वक्तुमर्हसि ३ गभस्तिरुवाच साधुसाधु महाभाग गुह्यमेतद
दुदाहृतम् यन्न कस्यचिदाख्यातं ब्रम्हविष्ण्विंद्रदेवतैः ४ तदहं कथयिष्यामि त्वया पृष्टो द्विजोत्तम ततो माघे तु संप्राप्ते शुचिः स्नातो जितें
द्रियः ५ कामक्रोधाभिमानेर्ष्यालोभपैशून्यवर्जितः देवदेवं च संस्मृत्य पादौ प्रक्षाल्य वारिणा ६ भूमावपतितं ग्राह्यं गोमयं तत्र मानवः ति
लान्प्रक्षिप्य कार्पासं पिंडकांश्चैव कारयेत् ७ अष्टोत्तरशतं चैव नात्र कार्या विचारणा ततो माघे च संप्राप्ते त्वाषाढे चैव भवेद्यदि ८ मूले वा कृष्ण
पक्षस्यैकादश्यां नियमं ततः गृण्हीयात्पुण्यफलदं विधानं तत्र मे शृणु ९ देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः कृष्णनामानि संकीर्त्य
क्षुतजृंभास्खलत्सु सर्वदा १० रात्रौ जागरणं कुर्याद्रात्रौ होमं च कारयेत् अर्चयेद्देवदेवेशं शंखचक्रगदाधरम् ११ चंदनागरुकर्पूरैर्नैवेद्यैः कृसरत
था संस्मृत्य नाम्ना च ततः कृष्णाख्येन पुनः पुनः १२ कूष्मांडैर्नारिकेलैश्च तथाथवा बीजपूरकैः सर्वाभावेपि विप्रेंद्र शस्तं पूगीफलं तथा १३

अर्घ्यंदत्वाविधानेनपूजयित्वाजनार्दनम् कृष्णकृष्णकृपालुस्त्वमगतीनांगतिप्रद १४ संसारार्णवमग्नानांप्रसीदपरमेश्वर नमस्तेपुंड
रीकाक्षनमस्तेविश्वभावन १५ सुब्रम्हण्यनमस्तेस्तुमहापुरुषपूर्वज गृहाणार्घ्यंमयादत्तंलक्ष्म्यासहजगत्पते १६ ततस्तुपूजयेद्विप्रमुदकुंभंप्रदापयेत्
छत्रोपानहवस्त्रैश्चकृष्णोमेप्रियतामिति १७ कृष्णाधेनुःप्रदातव्यायथाशक्त्याद्विजोत्तम तिलपात्रंद्विजश्रेष्ठदद्यात्तत्रविचक्षणः १८
स्नानप्राशनयोःशस्ताः श्वेताःकृष्णास्तिलामुने तान्प्रदद्यात्प्रयत्नेनयथाशक्त्याद्विजोत्तम १९ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ति
लस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी २० तिलभुक्तिलदाताचषट्तिलाःपापनाशकाः नारदउवाच कृष्णकृष्णमहाबाहोनमस्तेभक्त-
भावन २१ षट्तिलैकादशीभूतंकीदृशंफलमश्नुते सोपाख्यानंममब्रूहियदितुष्टोसियादव २२ श्रीकृष्णउवाच शृणुब्रम्हन्यथावृत्तंदृष्टंतत्कथ-
यामिते मृत्युलोकेपुरात्वासीद्ब्राम्हणीतत्रनारद २३ व्रतचर्यारतीनित्यंदेवपूजारतासदा मासोपवासनिरताममभक्ताचसर्वदा २४ कृष्णोप
वाससंयुक्ताममपूजापरायणा शरीरंक्लेशितंनित्यमुपवासैर्द्विजोत्तम २५ दीनानांब्राम्हणानांचकुमारीणांचभक्तितः गृहादिकंप्रयच्छं
तीसर्वकालंमहामतिः २६ अतिकृच्छ्ररतासातुसर्वकालेषुवैद्विज शुद्धमस्याःशरीरंहिव्रतैःकृच्छ्रैर्नसंशयः २७ अथिनंवैष्णवंलोकंका
यक्लेशेनवैतथा नदत्तमन्नदानंहियेनतृप्तिःपराभवेत् २८ एतज्ज्ञातंमयाब्रम्हन्मृत्युलोकमुपागतः कापिलंरूपमास्थायभिक्षापात्रेणयाचि
ता २९ ब्राम्हण्युवाच कस्मात्त्वमागतोब्रम्हन्वदयास्मात्समागतः पुनरेवमयाप्रोक्तंदेहिभिक्षांचसुंदरि ३० तयाकोपेनमहतामृत्पिंडस्ता
म्रभाजने क्षिप्तोयावत्तयादेव्यापुनःसर्गंगतोद्विज ३१ ततःकालेनमहतातापसीसुमहाव्रता कदाचित्स्वर्गमायाताव्रतचर्याप्रभावतः ३२

तु

मृत्पिंडस्यप्रभावेनगृहंप्राप्तंमनोरमम् संजातेचैवविप्रर्षेधान्यकोशविवर्जितम् ३३ गृहंयावन्निरीक्षेतनकिंचित्तत्रपश्यति तावद्गृहाद्विनिष्क्रांताम
मानेचागताद्विज ३४ क्रोधेनमहताविष्टाइदंवचनमब्रवीत् मयाव्रतैश्चकृच्छ्रैश्चत्द्यपवासैरनेकशः ३५ पूजयाराधितोदेवःसर्वलोकस्यभा
वनः नधनंदृश्यतेकिंचिद्गृहेममजनार्दन ३६ ततश्चोक्तामयासातुगृहंगच्छयथागतम् आगमिष्यंतिसुतरांकौतूहलसमन्विताः ३७ देवपत्न्यस्तव
द्रष्टुंविस्मयेनसमन्विताः द्वारंनोद्घाटनीयंहिषट्तिलापुण्यवाचनात् ३८ एवमुक्तागतासातुयदावैमानुषीतदा अत्रांतरेसमायातादेवपत्न्यश्चना
रद ३९ ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमागताः द्वारमुद्घाटयत्वंचपश्यामत्वांशुभानने ४० मानुष्युवाच यदिद्रष्टुंमयाकार्यंसत्यंवाच्यंविशेषतः
षट्तिलावदतंपुण्यंद्वारोद्घाटनकारणात् ४१ एकापितत्रनवदत्षट्तिलाव्रतनाशतः अन्ययाकथितंतत्रद्रष्टव्यामानुषीमया ४२ ततोद्वा
रंसमुद्घाट्यदृष्टाताभिश्चमानुषी नदेवीनचगंधर्वीनासुरीनचपन्नगी ४३ दृष्टापूर्वंतयानारीईदृशासाद्विजर्षभ रूपकांतिसमायुक्ताक्षणेनस
मपद्यत ४४ धनंधान्यंचवस्त्रादिसुवर्णंरौप्यमेवच सर्वंभवनसंपन्नंषट्तिलायाःप्रसादतः ४५ अतितृष्णानकर्तव्यावित्तशाठ्यंविवर्जये
त् आत्मवित्तानुसारेणतिलान्वस्त्रादिदापयेत् ४६ लभतेचैवमारोग्यंततोजन्मनिजन्मनि दारिद्र्यंनचकष्टंवैनचदौर्भाग्यमेवच ४७ नभवे
द्वैद्विजश्रेष्ठषट्तिलायाउपोषणात् अनेनविधिनाराजन्तिलदानान्नसंशयः ४८ मुच्यतेपातकैःसर्वैर्नात्रकार्याविचारणा दानंचविधिना
सम्यक्सर्वपापप्रणाशनम् ४९ नानर्थःकश्चिन्नायासःशरीरेमुनिसत्तम ५० इतिश्रीभवि॰ माघकृष्णैकादशीषट्तिलानाम्नीमाहात्म्यंसंपूर्ण
म् अथमाघशुक्लैकादशीकथा युधिष्ठिरउवाच साधुकृष्णत्वयाप्रोक्ता आदिदेवजगत्पते स्वेदजाअंडजाश्चैवउद्भिजाश्चजरायुजाः

१ तेषांकर्ताविकर्ताच्चपलकः क्षयकारकः माघस्यकृष्णपक्षेतुषट्तिलाकथितामया २ शुक्लेचैकादशीयाचकथयस्वप्रसादतः किन्नामकोवि
धिस्तस्याः कोदेवस्तत्रपूज्यते ३ श्रीकृष्णउवाच कथयिष्यामिराजेंद्र शुक्लेमाघस्ययाभवेत् जयानाम्नीतिविख्यातासर्वपापहरापरा ४ प
वित्रापापहंत्रीच्चपिशाचत्वविनाशिनी नैवतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणाम् ५ नातःपरतराकाचित्पापघ्नीमोक्षदायिनी एतस्मात्कारणाद्रा
जन्कर्तव्येयंप्रयत्नतः ६ श्रूयतांराजशार्दूलकथांपौराणिकींशुभाम् पंकजेचपुराणेस्यामहिमाकथितामया ७ एकदानागलोकेवैदेवेंद्रोराज्य
चकारह देवास्तत्रसौख्येननिवसंतिमनोरमे ८ पीयूषपाननिरताह्यप्सरोगणसेविताः नंदनंतुवनेतत्रपारिजातोपशोभितम् ९ रमयंति
रमंतत्रह्यप्सरोभिर्दिवौकसः एकदारममाणोसौदेवेंद्रःस्वेच्छयानृप १० नर्तयामासहर्षात्सपंचाशत्कोटिनायिकाः गंधर्वास्तत्रगायंतिगंधर्वः
पुष्पदंतकः ११ चित्रसेनश्चचित्रैवचित्रसेनसुतातथा मालिनीतिचनाम्नातुचित्रसेनस्यकामिनी १२ मालिन्यांतुसमुत्पन्नःपुष्पवानितिना
मतः पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः १३ गंधर्वीपुष्पवत्याख्यामाल्यवत्यतिमोहिता कामस्यचशरैस्तीक्ष्णैर्विद्धांगीसाबभूव
ह १४ तयाभावकटाक्षैश्चमाल्यवांस्तुवशीकृतः लावण्यरूपसंपन्नातस्यारूपंनृपशृणु १५ बाहूतस्यास्तुकामेनकंठपाशौकृताविव
चंद्रवद्वदनंतस्यानयनेश्रवणायते १६ कर्णौतुशोभितौतस्याःकुंडलाभ्यांनृपोत्तम कंबुग्रीवायुताचैवदिव्याभरणभूषिता १७ पीनोन्नतौकु
चौतस्यामुष्टिमात्रंचमध्यमम् नितंबौविपुलौतस्याविस्तीर्णंजघनस्थलम् १८ चरणौशोभमानौतौरक्तोत्पलसमद्युती ईदृश्यापुष्पवत्याचमाल्य
वानतिमोहितः १९ शक्रस्यपरितोषायनृत्यार्थंतौसमागतौ गायमानौचतौतत्रह्यप्सरोगणसंगतौ २० नशुद्धगानंगायेतांचित्तभ्रमसमन्वितौ बद्ध

प्रीतयान्योन्यंकामबाणवशंगतौ २१ ज्ञात्वालेखवर्षभस्तत्र संगतंमानसंतयोः तालकालक्रियामानलोपादीतावभंजनात् २२ चिंतयित्वातु
मघवानवज्ञानंतथात्मनः कुपितश्चतयोरित्थंशापदास्यन्निदंजगौ २३ धिग्वांपापरतौमूढावाज्ञाभंगकरौमम युवांपिशाचौभवतंदंपतीरूप
धारिणौ २४ मृत्युलोकमनुप्राप्तौभुंजानौकर्मणःफलम् एवंमघवताशप्तावुभौदुःखितमानसौ २५ हिमवंतंगिरिंप्राप्ताविंद्रशापविमोहि
तौ उभौपिशाचतांप्राप्तौदारुणंदुःखमेवच २६ संतप्तमानसौतत्रमहाकृच्छ्रगतावुभौ गंधरसंचस्पर्शंचनजानंतौविमोहितौ २७ पीड्यमानौ
तुदाहेनदेहपातकरेणच तौननिद्रांसुखंप्राप्तौकर्मणातेनपीडितौ २८ परस्परंखादमानौचेरतुर्गिरिगह्वरम् पीड्यमानौतुशीतेनतुषारप्रभ
वेनतौ २९ दंतघर्षंप्रकुर्वाणौरोमांचितवपुर्धरौ ऊचेपिशाचःशीतार्तःसपत्नींतुपिशाचिकाम् ३० किंमावाभ्यांकृतंपापसत्यंतंदुःखदायकं ये
नप्राप्तंपिशाचत्वंस्वेनदुष्कृतकर्मणा ३१ नरकंदारुणंमत्वापिशाचत्वंचगर्हितं तस्मात्सर्वप्रयत्नेनपापंनैवसमाचरेत् ३२ इतिचिंतापरौतत्रस्था
स्तांदुःखेनकर्षितौ दैवयोगात्तयोःप्राप्तामाघस्यैकादशीसिता ३३ जयानाम्नीतिविख्यातातिथीनामुत्तमातिथिः तस्मिन्दिनेतुसंप्राप्तेतावा
हारविवर्जितौ ३४ आसातेतत्रनृपतेजलपानविवर्जितौ नकृतोजीवघातश्चनपत्रफलभक्षणम् ३५ अश्वत्थस्यसमीपेतुपतितौदुःखसंयुतौ
रविरस्तंगतोराजन्तथैवस्थितयोस्तयोः ३६ प्राप्ताचैवनिशाघोरादारुणाशीतधारिणी वेपमानौतुतौतत्रहिमेनचजडीकृतौ ३७ परस्परेणसल
ग्नौगात्रयोर्भुजयोरपि ननिद्रांनरतिंतत्रनचसौख्यमविंदताम् ३८ एवंतौराजशार्दूलशापेनेंद्रस्यपीडितौ इत्थंतयोर्दुःखितयोर्निजगा
मतदानिशा ३९ जयायास्तुव्रतेचीर्णेरात्रौजागरणेकृते तयोर्व्रतप्रभावेनयथाचासीत्तथाशृणु ४० द्वादशीदिवसेप्राप्तेताभ्यांचीर्णेजया

व्रते विष्णोः प्रभावान्नृपते पिशाचत्वं तयोर्गतम् ४१ पुष्पवती माल्यवांश्च पूर्वरूपौ बभूवतुः पुरातनस्नेहयुतौ पूर्वालंकारसंयुतौ ४२ विमानम
धिरूढौ तावप्सरोगणसेवितौ स्तूयमानौ तु गंधर्वैस्तुंबुरुप्रमुखैस्तथा ४३ हावभावसमायुक्तौ गतौ नाके मनोरमे देवेंद्रस्याग्रतो गत्वा प्रणामं चक्रु
र्मुदा ४४ तथाविधौ तु तौ दृष्ट्वा मघवान्विस्मितोऽब्रवीत् इंद्र उवाच वदतं केन पुण्येन पिशाचत्वं विनिर्गतम् ४५ मम शापवशं प्राप्तौ केन देवेन मो
चितौ माल्यवानुवाच वासुदेवप्रसादेन जयायाः सुव्रतेन च ४६ पिशाचत्वं गतं स्वामिन्सत्यं भक्तिप्रभावतः इति श्रुत्वा वचस्तस्य प्रत्युवाच सुरेश्वरः ४७
पवित्रौ पावनौ जातौ वंदनीयौ ममापि च हरिवासरकर्तारौ विष्णुभक्तिपरायणौ ४८ हरिभक्तिरता ये च शिवभक्तिरतास्तथा अस्माकमपि
ते मर्त्याः पूज्या वंद्या न संशयः ४९ विहरस्व यथा सौख्यं पुष्पवत्या सुरालये एतस्मात्कारणाद्राजन्कर्तव्यो हरिवासरः ५० जयाव्रतं तु राजेंद्र
ब्रम्हहत्यापहारकम् सर्वदाचाभिदत्तानि यज्ञाः स्तेन कृतानृप ५१ सर्वतीर्थेषु सुस्नातः कृतं येन जयाव्रतम् यः करोति नरो भक्त्या श्रद्धायुक्तो ज
याव्रतं ५२ कल्पकोटिशतं यावद्वैकुंठे मोदते ध्रुवम् पठणाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ५३ इति श्रीभविष्योत्तरपुराणे माघशुक्लैकादशी ज
यानाम्न्या माहात्म्यं संपूर्णम् ६ अथ फाल्गुनकृष्णैकादशीकथा युधिष्ठिर उवाच फाल्गुनस्यासिते पक्षे किन्नाम्न्येकादशी भवेत् वासुदेव
प्रसादेन कथयस्व ममाग्रतः १ श्रीकृष्ण उवाच कथयिष्यामि राजेंद्र कृष्णायां फाल्गुने भवेत् विजयेति च सा प्रोक्ता कर्तृणां जयदा सदा २
तस्याश्च व्रतमाहात्म्यं सर्वपापहरं परम् नारदः परिपप्रच्छ ब्रम्हाणं कमलासनम् ३ फाल्गुनस्यासिते पक्षे विजया नाम या तिथिः तस्या व्रतं सुरश्रेष्ठ
कथयस्व प्रसादतः ४ इति पृष्टो नारदेन प्रत्युवाच पितामहः ब्रम्होवाच शृणु नारद वक्ष्यामि कथां पापहरां शुभाम् ५ यन्न कस्यचिदाख्यातं

एःमा॰ ११

मयैतद्विजयाव्रतम् पुरातनव्रतंत्वेतत्पवित्रंपापनाशनम् ६ जयंददातिविजयान्नृणांचैवनसंशयः रामस्तपोवनंयातोवर्षाण्येवचतुर्दश ७ न्यवसत्सं
चवद्यांतुससीतश्चसलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः ८ रावणेनहृताभार्यासीतानाम्नीतपस्विनी तेनदुःखेनरामोसौमोहमभ्या
गतस्तदा ९ भ्रमंजटायुषंतत्रददर्शविगतायुषम् कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यतः १० राज्ञेविज्ञाप्यतत्सर्वंसोपिमृत्युवशंगतः सुग्रीवे
णसमंसख्यमर्जयंसमजायत ११ वानराणामनीकानिरामार्थंसंगतानिवै ततोहनूमताहृष्टालंकोद्यानेतुजानकी १२ रामसंज्ञापनंतस्यैदत्तं
कर्ममहत्कृतं समेत्यरामेणपुनः सर्वंतत्रनिवेदितं १३ अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः सुग्रीवानुमतेनैवप्रस्थानंसमरोचयत् १४ स
गत्वावानरैःसार्द्धंतीरंनदनदीपतेः दृष्ट्वाब्धिंदुस्तरोरामोविस्मितोभूत्कपिप्रियः १५ प्रोत्फुल्ललोचनोभूत्वालक्ष्मणंवाक्यमब्रवीत् सौमित्रे
केनपुण्येनतीर्यतेवरुणालयः १६ अगाधसलिलःपूर्णोनक्रैर्भीमैःसमाकुलः उपायंनैवपश्यामियेनैवस्यात्तरोभवेत् १७ लक्ष्मणउवाच
आदिदेवस्त्वमेवासिपुराणपुरुषोत्तम बकदाल्भ्योमुनिश्चात्र वर्ततेद्वीपमध्यतः १८ अस्मात्स्थानाद्योजनार्धमाश्रमस्तस्यराघव अनेन
दृष्टाब्रह्माणोबहवोरघुनंदन १९ तंपृच्छगत्वाराजेंद्रपुराणमृषिपुंगवं इतिवाक्यंततःश्रुत्वालक्ष्मणस्यातिशोभनं २० जगामराघवोद्रष्टुंबक
दाल्भ्यंमहामुनिं प्रणनाममुनिंमूर्ध्नारामोविष्णुमिवामरः २१ मुनिर्ज्ञात्वाततोरामंपुराणपुरुषोत्तमम् केनापिकारणेनैवप्रविष्टंमानुषींतनुं
२२ उवाचसऋषिस्तत्रकुतोरामतवागमः रामउवाच त्वत्प्रसादादहंविप्रवरुणालयसन्निधिं २३ आगमोस्मिससैन्योत्रलंकांजेतुंसराक्षसाम्
भवताश्चानुकूल्येनतीर्यतेब्धिर्यथामया २४ तमुपायंवदमुनेप्रसादंकुरुसुव्रत एतस्मात्कारणाद्देवद्रष्टुंत्वामहमागतः २५ मुनिरुवाच

फा॰कृ॰ ११ ११

कथयिष्याम्यहंरामव्रतानामुत्तमंव्रतं कृतेनयेनसहसाविजयिस्तेभविष्यति २६ लंकांजित्वाराक्षसांचदीर्घांकीर्तिमवाप्स्यसि एकाग्रमानसो
भूत्वाव्रतमेतत्समाचर २७ फाल्गुनस्यासितपक्षे विजयैकादशीभवेत् तस्याव्रतेकृतेरामविजयस्तेभविष्यति २८ निःसंशयंसमुद्रंत्वंतरिष्यसि
सवानरः विधिस्तुश्रूयतांरामव्रतस्यास्यफलप्रदः २९ दशमीदिवसेप्राप्तेकुंभमेकंचकारयेत् हैमंवाराजतंवापिताम्रंवाप्यथमृन्मयं ३० स्था
पयेच्छोभितंकुंभंजलपूर्णंसपल्लवं तस्योपरिन्यसेद्देवंहैमंनारायणंप्रभुं ३१ एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् निश्चलंस्थापयेत्कुंभंगं
धमाल्यानुलेपनैः ३२ दाडिमैर्नारिकेलैश्चपूजयेच्चविशेषतः सप्तधान्यान्यधस्तत्रयवान्उपरिविन्यसेत् ३३ गंधैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि कुं
भाग्रेनद्दिनंरामनीयतेभक्तिभावतः ३४ रात्रौजागरणंतत्रतस्याग्रेकारयेद्बुधः द्वादशीदिवसेप्राप्तेमार्तंडस्योदयंप्रति ३५ नीत्वाकुंभंजलोद्देशं
नद्यांप्रस्रवणेतथा तडागेस्थापयित्वावापूजयित्वायथाविधि ३६ दद्यात्सदेवंकुंभंब्राम्हणेवेदपारगे कुंभेनसहराजेंद्रमहादानानिदापयेत् ३७
अनेनविधिनारामयूथपैःसहसंगतः कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ३८ इतिश्रुत्वावचोरामोयथोक्तमकरोत्तदा कृतेव्रतेसविजयीबभूवर
घुनंदनः ३९ अनेनविधिनाराजन्येकुर्वंतिनराव्रतम् इहलोकेजयस्तेषांपरलोकेतथाक्षयः ४० एतस्मात्कारणात्पुत्रकर्तव्यंविजयाव्रतम्
विजयायाश्चमाहात्म्यंसर्वकिल्बिषनाशनं ४१ पठनाच्छ्रवणात्तस्यवाजपेयफलंलभेत् ४२ इतिश्रीस्कंदपुराणेफाल्गुनकृष्णैकादशीवि
जयानाम्नीमाहात्म्यंसंपूर्णम् ६ अथफाल्गुनशुक्लैकादशीकथा मांधातोवाच वदब्रम्हन्महाभागयेनश्रेयोभवेन्मम ई
दृग्ब्रूहिब्रम्हयोनेयद्यनुग्रहतामयि १ सरहस्यंसेतिहासंव्रतानामुत्तमंव्रतम् वसिष्ठउवाच कथयाम्यधुनातुभ्यंसर्वव्रतफलप्रदम् २

आमलक्याव्रतंराजन्महापातकनाशनं मोक्षदंसर्वलोकानांगोसहस्रफलप्रदं३ अत्रैवोदाहरंतीममितिहासंपुरातनं यथाभुक्तिमनुप्राप्तोव्या
घोहिंसासमन्वितः४ वैदिशंनामनगरंहृष्टपुष्टजनाकुलं ब्राम्हणैःक्षत्रियैर्वैश्यैःशूद्रैश्चसमलंकृतं५ रुचिरंनृपशार्दूलब्रम्हघोषनिनादित
म् ननास्तिकोदुष्कृतिकस्तस्मिन्पुरवरेसदा६ तत्रसोमान्वयेराजाविख्यातःशशिबिंदुकः राजाचैत्ररथोनामधर्मात्मासत्यसंगरः
७ नागायुतबलःश्रीमांच्छस्त्रशास्त्रार्थपारगः तस्मिन्शासतिधर्मज्ञेधर्मात्मनिधराप्रभो८ कृपणोनैवकुत्रापिदृश्यतेनैवनिर्धनः सुकालः
क्षेमारोग्यंतस्मिन्राज्यंप्रशासति९ विष्णुभक्तिरतालोकास्तस्मिन्पुरवरेसदा हरिपूजारताश्चैवराजाचापिविशेषतः १० नशुक्लां
नैवकृष्णांचद्वादशीभुंजतेजनाः सर्वधर्मान्परित्यज्यहरिभक्तिपरायणाः ११ एवंसंवत्सराजग्मुर्बहवोराजसत्तम जनस्यसौख्य
युक्तस्यहरिभक्तिरतस्यच१२ अथकालेनसंप्राप्ताद्वादशीपुण्यसंयुता फाल्गुनस्यसितेपक्षेनाम्नात्वामलकीस्मृता१३ तामवाप्यजनाः
सर्वेबालकास्थवरानृप नियमंचोपवासंचसर्वेचक्रुर्नराविभो१४ महाफलंव्रतंज्ञात्वास्नानंकृत्वानदीजले तत्रदेवालयेराजालोकयु-
क्तोमहाप्रभुः१५ पूर्णकुंभमवस्थाप्यछत्रोपानहसंयुतम् पंचरत्नसमायुक्तंदिव्यगंधाधिवासितं१६ दीपमालान्वितंचैवजामदग्न्यस
मन्वितम् पूजयामासुरव्यग्राधात्रींचमुनिभिर्जनाः१७ जामदग्न्यनमस्तेस्तुरेणुकानंदवर्धन आमलकीकृतछायभक्तिमुक्तिव
रप्रद१८ धात्रिधातृसमुद्भूतेसर्वपातकनाशिनि आमलकीनमस्तुभ्यंगृहाणार्घ्योदकंमम१९ धात्रिब्रम्हस्वरूपासित्वंतुरामेणपूजि
ता प्रद क्षणविधानेनसर्वपापहराभव २० तत्रजागरणंचक्रुर्जनाःसर्वेसुभक्तितः एतस्मिन्नेवकालेतुव्याधस्तत्रसमागतः



१२

२१ क्षुधाश्रमपरिव्याप्तोमहाभारेणपीडितः कुटुंबार्थजीवघातीसर्वधर्मबहिष्कृतः २२ जागरंतत्रसंपश्यद्दामलक्यांक्षुधातुरः दीप
मालाकुलंदृष्ट्वातत्रैवनिषसादसः २३ किमेतदितिसंचिंत्यप्राप्तोविस्मयतांभृशम् ददर्शकुंभंतत्रस्थंदेवंदामोदरंतथा २४ ददर्शामलकींवृ
क्षंतत्रस्थांश्चैवदीपकान् वैष्णवंचतथाख्यानंशुश्रावपठतांनृणाम् २५ एकादश्याश्चमाहात्म्यंशुश्रावक्षुधितोपिसन् जाग्रतस्तस्यसा
रात्रिर्गताविस्मितचेतसः २६ ततःप्रभातसमयेविविशुर्नगरजनाः व्याधोपिगृहमागत्यबुभुजेप्रीतमानसः २७ ततःकालेनमहता-
व्याधःपंचत्वमागतः एकादश्याःप्रभावेनरात्रौजागरणेनच २८ राज्यंप्रपेदेसुमहच्चतुरंगबलान्वितम् जयंतीनामनगरीतत्रराजा
विदूरथः २९ तस्मात्सतनयोजज्ञेनाम्नावसुरथोबली चतुरंगबलोपेतोधनधान्यसमन्वितः ३० दशायुतानिग्रामाणांबुभुजेभ
यवर्जितः तेजसादित्यसदृशःकांत्याचंद्रसमप्रभः ३१ पराक्रमेविष्णुसमःक्षमयापृथिवीसमः धार्मिकःसत्यवादीचविष्णुभक्ति
परायणः ३२ ब्रह्मज्ञःकर्मशीलश्चप्रजापालनतत्परः यजतेविविधान्यज्ञान्सराजापरदर्पहा ३३ दानानिविविधान्येवप्रददाति
चसर्वदा एकदामृगयांयातोदैवान्मार्गपरिच्युतः ३४ नदिशंनैवविदिशंवेत्तितत्रमहीपतिः उपधायचदोर्मूलमेकाकीगहनेव
ने ३५ श्रांतश्चक्षुधितोस्वंतंसंविवेशमहीपतिः अत्रांतरेम्लेच्छगणःपर्वतांतरवासभाक् ३६ आययौतत्रयत्रास्तेराजापरबला
र्दनः कृतवैरास्तुतेराज्ञासर्वदैवोपतापिताः ३७ परिवार्यततस्तस्थूराजानंभूरिदक्षिणम् हन्यतांहन्यतांचायंपूर्ववैरविरुद्धधीः
३८ अनेननिहताःपूर्वंपितरोभ्रातरःसुताः पौत्राश्चभागिनेयाश्चमातुलाश्चनिपातिताः ३९ निष्काशिताश्चस्वस्थानाद्विक्षिप्ताश्च-

दिशोदश एतावदुक्त्वातेसर्वेतत्रैनंहंतुमुद्यताः ४० पाशैश्चपट्टिशैःखड्गबाणैर्धनुषिसंस्थितैः सर्वतोरिगणास्तेचराजानंहंतुमुद्यताः ४१
सर्वाणिशस्त्राणिसमाद्रवंतिनवैशरीरंप्रविशंतितस्य तेचापिसर्वेहतशस्त्रसंघाम्लेंछाबभूवुर्गतदेहजीवाः ४२ यदापिचलितुंतत्रनशे
कुस्तेरयोभृशम् शस्त्राणिकुंठितानिजग्मुः सर्वेषांहतचेतसाम् ४३ दीनाबभूवुस्तेसर्वेयेतंहंतुंसमागताः एतस्मिन्नेवकालेतुतन्
स्यराज्ञःशरीरतः ४४ निःसृताप्रमदात्येकासर्वावयवशोभना दिव्यगंधसमायुक्ता दिव्याभरणभूषिता ४५ दिव्यमाल्यांबरध
राभ्रूकुटीकुटिलानना स्फुलिंगाभ्यांचनेत्राभ्यांपावकंवमतीबहु ४६ चक्रोद्यतकराचैवकालरात्रिरिवापरा अभ्यधावतसंक्रुद्धान्
म्लेंछानत्यंतदुःखितान् ४७ निहताश्चयदाम्लेंछास्तेविकर्मरतास्तथा ततोराजाविबुद्धःसन्ददर्शमहदद्भुतम् ४८ हतान्म्लेंच्छग
णान्दृष्ट्वाराजाहर्षमवापसः इहकेनहताम्लेंछाअत्यंतावैरिणोमम ४९ केनचेदंमहत्कर्मकृतमस्माद्धितार्थिना एतस्मिन्नेवकालेतु
वागुवाचाशरीरिणी ५० तंस्थितंनृपतिंदृष्ट्वानिकामंविस्मयान्वितम् शरणंकेशवादन्योनास्तिकोपिद्वितीयकः ५१ वनात्तस्मात्स
कुशलीसमायातोपिभूमिपः राज्यंचकारधर्मात्माधरायांदेवतेशवत् ५२ वसिष्ठउवाच तस्मादामलकींराजन्येकुर्वंतिनरोत्तमाः
तेयांतिवैष्णवंलोकंनात्रकार्याविचारणा ५३ इतिश्रीब्रह्मांडपुराणेफाल्गुनशुक्लैकादशीमाहात्म्यंसंपूर्णम् ६ अथचैत्र
कृष्णैकादशीकथा युधिष्ठिरउवाच फाल्गुनस्यसितेपक्षेश्रुतासामलकीमया चैत्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत्
१ श्रीकृष्णउवाच शृणुराजेंद्रवक्ष्यामिअत्यंतंपापनाशनम् यल्लोमेशोब्रवीत्पृष्टोमांधातांचक्रवर्तिना २ मांधातोवाच भ

गवन्श्रोतुमिच्छामिलोकानांहितकाम्यया चैत्रमास्यसितेपक्षेकिन्नामैकादशीभवेत् ३ कोविधिः किंफलंतस्याः कथयस्वप्रसादतः
लोमेशउ० श्रूयतांराजशार्दूलकामदांसिद्धिदांतथा कथांविचित्रांशुभदांपापहांधर्मदायिनाम् ४ पुराचैत्ररथोद्देशेअप्सरोगणसेविते व
संतसमयेप्राप्तेपुष्पैराकुलितेवने५ गंधर्वकन्यास्तत्रैववरमंतिसहकिन्नरैः पाकशासनमुख्याश्चक्रीडंतेचदिवौकसः ६ नापरंसुंदरंकिंचिद्
नाच्चैत्ररथाद्वनम् तस्मिन्वनेतुमुनयस्तपंतिबहुलंतपः ७ सहदेवैस्तुमघवारमतेमधुमाधवौ एकोमुनिवरस्तत्रमेधावीनामनामतः ८
अप्सरास्तमुनिवरंमोहनायोपचक्रमे मंजुघोषेतिविख्याताभावंतस्यविचिन्वती ९ क्रोशमात्रेस्थितातस्यभयादाश्रमसंन्निधौ गा
यंतीमधुरंसाधुपीडयंतीविपंचिकाम् १० गायंतीतामथालोक्यपुष्पचंदनवेष्टिताम् कामोपिविजयाकांक्षीशिवभक्तंमुनीश्वरम् ११
तस्याःशरीरसंसर्गंशिववैरमनुस्मरन् तुल्यभ्रुवौधनुःकोटीगुणंकृत्वाकटाक्षकम् १२ मार्गणौनयनेकृत्वापक्षयुक्तौयथाक्रमम्
कुचौकृत्वापटकुटौविजयायोपसंस्थितः १३ मंजुघोषाभवत्तत्रकामस्येववरूथिनी मेधाविनंमुनिंदृष्ट्वासापिकामेनपीडिता १४
यौवनोद्भिन्नदेहोसौमेधाव्यतिविराजिते सितोपवीतसहितोदंडीस्मरइवापरः १५ मेधावीवसतिस्मासौच्यवनस्याश्रमेशुभे
मंजुघोषास्थितातत्रदृष्ट्वातंमुनिपुंगवम् १६ मदनस्यवशंप्राप्तामंदंमंदमगायत रणद्वलयसंयुक्तासिंजन्नूपुरमेखला १७ गा
यंतींभावसंयुक्तांविलोक्यमुनिपुंगवः मदनेनससैन्येननीतोमोहवशंबलात् १८ मंजुघोषासमागम्यमुनिंदृष्ट्वातथाविधं हाव
भावकटाक्षैस्तुमोहयामासचांगना १९ अधःसंस्थाप्यवीणांसासस्वजेतंमुनीश्वरम् वल्लीवाकुलितावृक्षंवातवेगेनवेपिता २०

सोपिरेमेतयासार्धमेधावीमुनिपुंगवः तस्मिन्नेववनोद्देशेहस्वातदृह्मुत्तमम् २१ शिवतत्वंगतंतस्यकामतत्ववशंगतः नानिशांनदिनंसो-
पिरमंजानातिकामुकः २२ वहुलश्चगतः कालोमुनेराचारकोपकः मंजुघोषादवलोकेगमनायोपचक्रमे २३ गच्छंतीप्रत्युवाचाथर
मंतंमुनिपुंगवम् आदेशोदीयतांब्रम्हन्स्वधामगमनायमे २४ मेधाव्युवाच अद्येवत्वंसमायाताप्रदोषादोवरानने यावत्प्र
भातसंध्यास्यात्तावत्तिष्ठममांतिके २५ इतिश्रुत्वामुनेर्वाक्यंभयभीताबभूवसा पुनर्वैरमयामासतंमुनिंऋषिसत्तमम् २६ मुनिशा
पभयाद्भीताबहुलान्परिवत्सरान् वर्षाणांपंचपंचाशच्छतमासान्दिनत्रयम् २७ सारेमेमुनिनातेननिशार्धमिवचाभवत् साच
तंप्रत्युवाचाथतस्मिन्कालेगतंमुनिम् २८ आदेशोदीयतांब्रम्हन्गंतव्यंस्वगृहंमम मेधाव्युवाच प्रातःकालोधुनेवास्तेश्रूयतांवचनं
मम कुर्वसंध्यांदिनेयावत्तावत्वंवैस्थिराभव २९ इतिवाक्यंमुनेःश्रुत्वाभयेनचसमाकुला स्मितंकृत्वातुसाकिंचिदुवाचरूविस्मिता ३०
अप्सराउवाच कियत्प्रमाणाविप्रेंद्रतवसंख्यागतानवा मयिप्रसादंकृत्वातुगतःकालोविचार्यताम् ३१ इतितस्यावचःश्रुत्वावि
स्मयोत्फुल्ललोचनः सध्यात्वात्वद्दिविप्रेंद्रःप्रमाणमकरोत्तदा ३२ समाश्चसप्तपंचाशद्गताममतयासह नेत्राभ्यांविस्फुलिंगान्समुंच
मानोतिकोपनः ३३ कालरूपांचतांदृष्ट्वातपसःक्षयकारिणीम् दुःखार्जितममतपोनीतंतदनयाक्षयम् ३४ सकंपोष्ठोमुनिस्तत्रप्र-
कुपाचाकुलेंद्रियः सतांशशापमेधावीत्वंपिशाचीभवेतिच ३५ धिक्कृत्वांपापेदुराचारेकुलटेपातकप्रिये तस्यशापेनसादग्धाविनया
वनतास्थिता ३६ उवाचवचनंसुभ्रूःप्रसादंवांछतीमुनीन् प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ३७ सतांसंगोहिफलतिव

चोभिः सप्तमेपदे त्वयासहममब्रह्मन्नुगताःसुबहुवःसमाः ३८ एतस्मात्कारणात्स्वामिन्प्रसादंकुरुस्कुवत मुनिरुवाच शृणुसे
वचनंभद्रेशापानुग्रहकारकम् किंकरोमित्वयापापक्षयंनीतंमहत्तपः ३९ चैत्रस्यकृष्णपक्षेयाभवदेकादशीशुभा पापमोचनि
कानामसर्वपापक्षयंकरी ४० तस्याव्रतंकृतेस्फक्क पिशाचत्वंप्रयास्यति इत्युक्त्वातांसमेधावीजगामपितुराश्रमम् ४१ तमागतं
समालोक्यवचनंमत्युवाचह किमेतद्विहितंपुत्रत्वयापुण्यक्षयःकृतः ४२ मेधाव्युवाच पापंकृतंमहत्तातरमिताचाप्सरामया
प्रायश्चित्तंब्रूहितातयेनपापक्षयोभवेत् ४३ च्यवनउवाच चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी अस्याव्रतेकृतेपुत्रपाप
राशिःक्षयंव्रजेत् ४४ इतिश्रुत्वापितुर्वाक्यंकृतंतेनव्रतोत्तमम् गतंपापंक्षयंतस्यपुण्ययुक्तोबभूवसः ४५ प्राप्यवंमंजुघोषा
चकृत्वातद्व्रतमुत्तमम् पिशाचत्वविनिर्मुक्तापापमोचनिकाव्रतात् ४६ दिव्यरूपधरासापिगतानाकंवराप्सराः लोमेशउवाच इ
त्थंप्रभूतप्रभावंहिपापमोचनिकाव्रतम् ४७ पापमोचनिकांराजन्येकुर्वंतिचमानवाः तेषांपापंचयत्किंचित्तत्सर्वंक्षयतांव्रजेत्
४८ पठणाच्छ्रवणाद्राजन्गोसहस्रफलप्रदा ब्रम्हहाहेमहारीचस्कुरापोगुरुतल्पगः ४९ व्रतस्यचास्यकरणात्पापमुक्ताभवंति
ते धहपुण्यप्रदंह्येतत्करणाद्व्रतमुत्तमम् ५० इतिश्रीभविष्योत्तरपुराणेचैत्रकृष्णैकादशीपापमोचनीमाहात्म्यंसंपूर्णम् अथ
चैत्रशुक्लैकादशीकथा सूतउवाच देवकीनंदनंकृष्णंवसुदेवात्मजंहरिम् नमस्कृत्वाप्रवक्ष्यामिमहापातकहानितुम् १
युधिष्ठिरायकृष्णेनकथितानिमहात्मना एकादशीमहात्म्यानिनानापापहराणिच २ अष्टादशपुराणेभ्योविविच्यस्कुमहात्मना च

तुर्विंशतिसंख्यानिनानाख्यानैर्युतानिच ३ तानिवक्ष्यामिभोविप्राः शृणुध्वंसुसमाहिताः युधिष्ठिरउवाच वासुदेवनमस्तुभ्यं
कथयस्वममाग्रतः ४ चैत्रस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् श्रीकृष्णउवाच शृणुष्वैकमनाराजन्कथामेतांपुरातनीम् ५ वसि
ष्ठायामकथयत्प्राग्दिलीपायपृच्छते दिलीपउवाच भगवन्श्रोतुमिच्छामि कथयस्वप्रसादतः ६ चैत्रेमासिसितेपक्षेकिंना
मैकादशीभवेत् वसिष्ठउवाच साधुपृष्टंनृपश्रेष्ठकथयामितवाग्रतः चैत्रस्यशुक्लपक्षेतुकामदानामनामतः ७ एकादशीपु-
ण्यतमांपापेंधनदवानला शृणुराजन्कथामेतांपापघ्नींपुण्यदायिनीम् ८ पुराभोगिपुरेरम्येहेमरत्नविभूषिते पुंडरीकमुखानाग
निवसंतिमहोत्कटाः ९ तस्मिन्पुरेपुंडरीकोराजाराज्यंकरोतिच गंधर्वैःकिन्नरैश्चैवत्वप्सरोभिःसुसेव्यते १० वराप्सरास्तुललि
तागंधर्वोललितस्तथा उभौरागेणसंयुक्तौदंपतीकामपीडितौ ११ रेमातेस्वगृहेरम्यधनधान्ययुतेसदा ललितायास्तुहृदये
पतिर्वसतिसर्वदा १२ हृदयेतस्यललितानित्यंवसतिभामिनी एकदापुंडरीकाद्याःक्रीडंतिसदसिस्थिताः १३ गीतमानंप्रकुर्व
तेललितोदयितांविना पदबंधेस्खलज्जिव्होबभूवललितांस्मरन् १४ मनोभावंविदित्वास्यकर्कटोनागसत्तमः पदबंधच्युतिं
तस्यपुंडरीकेन्यवेदयत् १५ शशापललितंतत्रमदनातुरचेतसम् राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः १६ यतःपत्नी
वशोजातोगायमानोममाग्रतः वचनात्तस्यराजेंद्ररक्षोरूपोबभूवह १७ रौद्राननोविरूपाक्षोदृष्टमात्रोभयंकरः बहुयोज
नविस्तीर्णोमुखंकंदरसन्निभम् १८ चंद्रसूर्यनिभेनेत्रेग्रीवापर्वतसन्निभा नासारंध्रेतुविवरेअधरौयोजनार्धकौ १९ शरीरंतस्य

राजेंद्रउच्छ्रितयोजनाष्टकम् ईदृशोराक्षसःसोभूद्भुंजानःकर्मकःफलम् २० ललितातमथालोक्यस्वपतिंविकृताकृतिं चिंतयामास
मनसादुःखेनमहतार्दिता २१ किंकरोमिक्वगच्छामिपतिःपापेनपीडितः इतिसंस्मृत्यमनसानशर्मलभतेतुसा २२ चचारपतिनासार्धंल-
लितागहनेवने बभ्रामविपिनेदुर्गेकामरूपःसराक्षसः २३ निर्घृणःपापनिरतोविरूपःपुरुषादकः नसुखंलभतेरात्रौदिवापाप
पीडितः २४ ललितादुःखितातीवपतिंदृष्ट्वातथाविधम् भ्रमंतीतेनसार्धंसारुदंतीगहनेवने २५ कदाचिदगमाद्विंध्यशिखरेबहुकौतुके
ऋष्यशृंगमुनेस्तत्रदृष्ट्वाश्रमपदंशुभम् २६ शीघ्रंजगामललिताविनयावनतास्थिता प्रत्युवाचमुनिर्दृष्ट्वाकात्वंकस्यसुताशुभे २७ किं
मर्थमिहसमायातासत्यंवदममाग्रतः ललितोवाच वीरधन्वेतिगंधर्वःसुतातस्यमहात्मनः २८ ललितांनाममांविद्धिपत्यर्थमिहचा
गताम् भर्तामेशापदोषेणराक्षसोभून्महामुने २९ रौद्ररूपोदुराचारस्तंदृष्ट्वानास्तिमेसुखम् सांप्रतंशाधिमांब्रह्मन् प्रायश्चित्तंवदप्रभो
३० येनपुण्येनविप्रेंद्रराक्षसत्वाद्विमुच्यते ऋषिरुवाच चैत्रमासस्यरंभोरुशुक्लपक्षस्यसांप्रतम् ३१ कामदैकादशीनाम्नायाकृताका
मदानृणाम् कुरुष्वतद्व्रतंभद्रेविधिपूर्वंमयोदितम् ३२ तस्यव्रतस्ययत्पुण्यंतत्स्वभर्त्रेप्रदीयताम् दत्तेपुण्येक्षणात्तस्यशापदोषःप्रशाम्यति
३३ इतिश्रुत्वामुनेर्वाक्यंललिताहर्षिताभवत् उपोष्यैकादशींराजन्द्वादशीदिवसेतदा ३४ विप्रस्यैवसमीपेतुवासुदेवाग्रतःस्थिता
वाक्यमूचेचललिता स्वपत्युस्तारणायवै ३५ मयातुयद्व्रतंचीर्णंकामदायामुपोषणम् तस्यपुण्यप्रभावेनगच्छत्वस्यपिशाचता
३६ ललितावचनादेववर्तमानोपितत्क्षणे गतपापःसललितोदिव्यदेहोबभूवह ३७ राक्षसत्वंगतंतस्यप्राप्तोगंधर्वतांपुनः हेम

रत्नसमाकीर्णेगिरिमेरुललितयासह ३८ तौविमानसमारूढौपूर्वरूपाधिकावुभौ दंपतीचापिशोभेतांकामदायाःप्रभावतः ३९ इतिज्ञात्वा
नृपश्रेष्ठकर्तव्यैषाप्रयत्नतः लोकानांचहितार्थायतवाग्रेकथितामया ४० ब्रम्हहत्यादिपापघ्नीपिशाचत्वविनाशिनी नातःपरतराकाचि
त्त्रैलोक्येसचराचरे ४१ पठनाच्छ्रवणाद्वापिवाजपेयफलंलभेत् ४२ इतिश्रीवाराहपुराणेचैत्रशुक्लाकामदानामैकादशीमाहात्म्यं
संपूर्णम् ७ अथवैशाखकृष्णैकादशीकथा युधिष्ठिरउवाच वैशाखस्यासितेपक्षेकिंनामैकादशीभवेत् महिमानंकथय
मेवासुदेवनमोस्तुते १ श्रीकृष्णउवाच सौभाग्यदायिनीराजन्इहलोकेपरत्रच वैशाखकृष्णपक्षेतुनाम्नाचैववरूथिनी २ व
रूथिन्याव्रतेनैवसौख्यंभवतिसर्वदा पापहानिश्चभवतिसौभाग्यप्राप्तिरेवच ३ दुर्भगाधिकरोत्येनांस्त्रीसौभाग्यमवाप्नुयात्
लोकानांचैवसर्वेषांभुक्तिमुक्तिप्रदायिनी ४ सर्वपापहरानृणांगर्भवासनिकृंतनी वरूथिन्याव्रतेनैवमांधातास्वर्गतिंगतः ५ धुंधु
मारादयश्चान्येराजानोबहवस्तथा ब्रम्हकपालनिर्मुक्तोबभूवभगवान्भवः ६ दशवर्षसहस्राणितपस्तप्यतियोनरः तत्तुल्यंफल
माप्नोति वरूथिन्याव्रतादपि ७ श्रद्धावान्यस्तुकुरुतेवरूथिन्याव्रतंनरः वांछितंलभतेसोपिइहलोकेपरत्रच ८ पवित्रापावनीह्येषा
महापातकनाशिनी भुक्तिमुक्तिप्रदात्वेषाकृतानृणांनृपसत्तम ९ अश्वदानान्नृपश्रेष्ठगजदानंविशेषतः गजदानाद्भूमिदानंतिलदानं
ततोधिकम् १० ततःस्वर्णदानंतुअन्नदानंततोधिकम् अन्नदानात्परंदानंनभूतंनभविष्यति ११ पितृदेवमनुष्याणांतृप्तिरन्नेन
जायते तत्समंकविभिःप्रोक्तंकन्यादानंनृपोत्तम १२ धेनुदानंचतत्तुल्यमित्याहभगवान्स्वयम् प्रोक्तेभ्यःसर्वदानेभ्योविद्यादानं

विशिष्यते १३ तत्फलंसमवाप्नोतिनरः कृत्वावरूथिनीम् कन्याविक्तेनजीवंतियेनराः पापमोहिताः १४ तेनरानरकेयांतियावदाभूत
संप्लवम् तस्मात्सर्वप्रयत्नेननग्राह्यंकन्यकाधनम् १५ यश्चगृण्हातिलोभेनकन्याक्रीत्वाचतन्धनम् सोन्यजन्मनिराजेंद्रओतुर्भव
तिनिश्चितम् १६ कन्यांवित्तेनयोदद्याद्यथाशक्तिस्वलंकृताम् तत्पुण्यसंख्यांकर्तुंहिचित्रगुप्तोभवत्यलम् १७ तत्फलंसमवाप्नोति
नरः कृत्वावरूथिनीम् कांस्यंमांसंमसूरान्नंचणकान्कोद्रवांस्तथा १८ शाकंमधुपरान्नंचपुनर्भोजनमैथुने वैष्णवोव्रतकर्तान्वदश-
म्यांदशवर्जयेत् १९ द्यूतक्रीडांचनिद्रांचतांबूलंदंतधावनम् परापवादंपैशून्यंपतितैःसहभाषणम् २० क्रोधंचैवानृतंवाक्यमेकादश्यांवि
वर्जयेत् कांस्यंमांसंमसूरांश्चक्षौद्रंवितथभाषणम् २१ व्यायामंचप्रवासंचपुनर्भोजनमैथुने क्षौद्रंतैलंपरान्नंचद्वादश्यांपरिवर्जयेत्
२२ अनेनविधिनाराजन्विहितायैर्वरूथिनी सर्वपापक्षयंकृत्वादद्यादंतेक्षयांगतिम् २३ रात्रौजागरणंकृत्वापूजितोयैर्जनार्दनः
सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम् २४ तस्मात्सर्वप्रयत्नेनकर्तव्यापापभीरुभिः क्षपारितनयाद्भीतैर्नरदेववरूथिनी २५ पठ
नाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते २६ इतिश्रीभवि० पुराणेवैशाखकृष्णवरूथिनी
नाम्न्येकादशीमाहात्म्यंसंपूर्णम् ७ अथवैशाखशुक्लैकादशीकथा युधिष्ठिरउवाच वैशाखस्यशुक्लपक्षेतुकिंनामैकादशीभवेत्
किंफलंकोविधिस्तस्याः कथयस्वजनार्दन १ श्रीकृष्णउवाच कथयामिकथामेतांशृणुध्वंधर्मनंदन वसिष्ठोयामकथयत्सुरारामायपृ
च्छते २ रामउवाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतम् सर्वपापक्षयकरंसर्वदुःखनिकृंतनम् ३ मयादुःखानिभुक्तानिसीताविरह

जानीवे ततोहंभयभीतोस्मिपृच्छामित्वांमहामुने ४ वसिष्ठउवाच साधुपृष्टंत्वयारामतवैषानैष्ठिकामतिः त्वन्नामग्रहणेनैवपूजो
भवतिमानवः ५ तथापिकथयिष्यामिलोकानांहितकाम्यया पवित्रंपावनानांचव्रतानामुत्तमंव्रतम् ६ वैशाखस्यसितेपक्षेएकादशीरामया
भवेत् मोहिनीनामसाप्रोक्तासर्वपापहरापरा ७ मोहजालात्प्रमुच्येतपातकानांसमूहतः अस्याव्रतप्रभावेनसत्यंसत्यंवदाम्यहम् ८ अत
स्तुकारणाद्रामकर्तव्येषाभवादृशैः पातकानांक्षयकरीमहादुःखविनाशिनी ९ शृणुष्वैकमनारामकथांपुण्यप्रदांशुभाम् अस्याःश्रव
णमात्रेणमहापापंप्रणश्यति १० सरस्वत्यास्तटेरम्येपुरीभद्रावतीशुभा द्युतिमान्नामनृपतिस्तत्रराज्यंकरोतिवै ११ सोमवंशोद्भवोराजा-
धृतिमान्सत्यसंगरः तत्रवैश्योनिवसतिधनधान्यसमृद्धिमान् १२ धनपालइतिख्यातःपुण्यकर्मप्रवर्तकः प्रपासभाद्यायतननतडागआ
रामकारकः १३ विष्णुभक्तिरतःशांतस्तस्यासन्पंचपुत्रकाः सुमनाद्युतिमांश्चैवमेधावीसुकृतीतथा १४ पंचमोधृष्टबुद्धिश्चमहापाप
परतःसदा वारस्त्रीसंगतिरतोविटगोष्ठीविशारदः १५ द्युतादिव्यसनासक्तःपरस्त्रीरतिलालसः नदेवान्नातिथीन्वृद्धान्पितॄंश्चैवद्वि
जानपि १६ अन्यायकर्तादुष्टात्मापितुर्द्रव्यक्षयंकरः अभक्ष्यभक्षकःपापःसुरापानरतःसदा १७ वेश्याकंठक्षिप्तबाहुर्भ्रमन्दृष्टश्चतुष्प
थे पित्रानिष्काशितोगेहात्सपरित्यक्तश्चबांधवैः १८ स्वदेहभूषणान्येवक्षयंनीतानितेनवै गणिकाभिःपरित्यक्तोनिंदितश्चधनक्षयात्
१९ ततश्चिंतापरोजातोवस्त्रहीनःक्षुधार्दितः किंकरोमिक्वगच्छामिकेनोपायेनजीव्यते २० तस्करत्वंसमारब्धंतत्रैवनगरेपुनः गृ
हीतोराजपुरुषैर्मुक्तश्चपितृगौरवात् २१ पुनर्बद्धःपुनर्मुक्तःपुनर्मुक्तःससप्तमैः धृष्टबुद्धिर्दुराचारोनिबद्धोनिगडैर्दृढैः २२ कशाघात

स्ताडितश्चपीडितश्चपुनःपुनः नस्थातव्यंहि मंदात्मन्त्वयामद्देशगोचरे २३ एवमुक्त्वाततोराज्ञामोचितोदृढबंधनात् निर्जगामभयात्त
स्यगतोसौगहनंवनम् २४ क्षुत्तृषापीडितश्चामितश्चेतश्चधावति सिंहवन्निजघानासौमृगसूकरचित्तलान् २५ आमिषाहारनिरतोवनेतिष्ठतिस
र्वदा करेशरासनेकृत्वानिषंगंपृष्ठसंगतम् २६ अरण्यचारिणोहंतिपक्षिणश्चचतुष्पदान् चकोरांश्चमयूरांश्चकंकांस्तित्तिरमूषकान् २७ एतान
न्यान्हंतिनित्यंधृष्टधीर्निर्गतघृणः पूर्वजन्मकृतैःपापैर्निमग्नःपापकर्दमे २८ दुःखशोकसमाविष्टश्चिंतयत्सोप्यहर्निशम् कौंडिन्यस्याश्रमप
दंप्राप्तःपुण्यवशात्क्वचित् २९ माधवेमासिजान्हव्यांकृतस्नानंतपोधनम् आससादधृष्टबुद्धिःशोकभारेणपीडितः ३० तद्वस्त्रबिंदुस्पर्शेनग
तपाप्माहताशुभः कौंडिन्यस्याग्रतःस्थित्वाप्रत्युवाचकृतांजलिः ३१ धृष्टबुद्धिरुवाच प्रायश्चित्तंवदब्रम्हन्विनायत्नेनयद्भवेत् आजन्मकृतपा
पस्यनास्तिवित्तंममाधुना ३२ ऋषिरुवाच शृणुष्वैकमनाभूत्वायेनपापक्षयस्तव वैशाखस्यसितेपक्षेमोहिनीनामनामतः ३३ एका
दशीव्रतंतस्याःकुरुमद्वाक्यनोदितः मेरुतुल्यानिपापानिक्षयंनयतिदेहिनाम् ३४ बहुजन्मार्जितान्येषामोहिनीसमुपोषिता इतिवाक्यं
मुनेःश्रुत्वाधृष्टबुद्धिर्हृष्टमानसः ३५ व्रतंचकारविधिवत्कौंडिन्यस्योपदेशतः कृतेव्रतेनृपश्रेष्ठहतपापोबभूवसः ३६ दिव्यदेहस्ततोभूत्वागरु
डोपरिसंस्थितः जगामवैष्णवंलोकंसर्वोपद्रववर्जितम् ३७ इतिहृष्टंरामचंद्रतमोमोहनिकृंतनम् नातःपरतरंकिंचित्त्रैलोक्येसचराचरे ३८
यज्ञादितीर्थदानानिकलांनार्हंतिषोडशीम् पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् ३९ इतिश्रीकूर्मपुराणेवैशाखशुक्लमोहिनीनामैकादशी
माहात्म्यंसंपूर्णम ७ अथज्येष्ठकृष्णैकादशीकथा युधिष्ठिरउवाच ज्येष्ठस्यकृष्णपक्षेतुकिन्नामैकादशीभवेत् श्रोतुमिच्छा

मिमाहात्म्यंतद्वदस्वजनार्दन १ श्रीकृष्णउवाच साधुपृष्टंत्वयाराजंल्लोकानांहितकाम्यया बहुपुण्यप्रदाह्येषामहापातकनाशिनी २ अपरा
नामराजेंद्र अपारफलदायिनी लोकेप्रसिद्धतांयातिअपरांयस्तुसेवते ३ ब्रह्महत्याभिभूतोपिगोत्रहाभ्रूणहातथा परापवादवादीचपरस्त्री
रसिकोपिच ४ अपरासेवनाद्राजन्विपाप्माभवतिध्रुवम् कूटसाक्ष्यंमानकूटंतुलाकूटंकरोतियः ५ कूटवेदंपठेद्विप्रःकूटशास्त्रंकरोतिच ज्यो
तिषीकूटगणकःकूटायुर्वेदकोभिषक् ६ कूटसाक्षीसमाह्येतेविज्ञेयानरकौकसः अपरासेवनाद्राजन्पापमुक्ताभवंतिते ७ क्षत्रियःक्षात्रधर्मं
यस्त्यक्त्वायुद्धात्पलायते सयातिनरकंघोरंस्वीयधर्मबहिष्कृतः ८ अपरासेवनाद्राजन्पापंत्यक्त्वादिवंव्रजेत् विद्यामधीत्ययःशिष्योगुरु
निंदांकरोतिच ९ महापातकयुक्तोपिनिरयंयातिदारुणम् अपरासेवनात्सोपिसद्गतिंप्राप्नुयान्नरः १० महिमानंचापरायाःशृणुराजन्वदाम्यहं
पुष्करत्रितयेस्नात्वाकार्तिक्यांयत्फलंलभेत् ११ गयायांपिंडदानेनपितृणांतृप्तिदायथा सिंहस्थितेदेवगुरौगौतमीस्नानकोनरः १२ यत्फलं
समवाप्नोतिकुंभेकेदारदर्शनात् बदर्याश्रमयात्रायांतत्तीर्थसेवनादपि १३ यत्फलंसमवाप्नोतिकुरुक्षेत्रेरविग्रहे गजाश्वहेमदानानियज्ञे
दे [illegible]सुवर्णदः १४ यत्फलंसमवाप्नोति अपरायाव्रतान्नरः अर्धप्रसूतांगांदत्वासुवर्णवसुधांतथा १५ नरस्तत्फलमाप्नोतिअपरा
व्रतसेवनात् पापद्रुमकुठारोयंपापेंधनदवानलः १६ पापांधकारसूर्योयंपापसारंगकेसरी बुद्बुदाइवतोयेषुपुत्तिकाइवजंतुषु १७ जायंतेमर-
णायैव एकादश्यांव्रतंविना अपरांसमुपोष्यैवपूजयित्वात्रिविक्रमम् १८ वर्षपापविनिर्मुक्तोविष्णुलोकेव्रजेन्नरः लोकानांचहितार्थायतवा
ग्रेकथितंमया १९ पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते २० इतिश्रीब्रह्मांडपुराणेज्येष्ठकृष्णैकादशीअपरानाम्नीमाहात्म्यंसंपूर्णम्

अथज्येष्ठशुक्लैकादशीकथा भीमसेनउवाच पितामहमहाबुद्धेशृणुमेपरमंवचः युधिष्ठिरश्चकुंतीचतथाद्रुपदनंदिनी १ अर्जुनोनकुलश्चैवसहदेवस्तथैवच एकादश्यांनभुंजंतिकदाचिदपिसुव्रत २ तेमांब्रुवंतिवैनित्यंमाभुंक्ष्वत्वंवृकोदर अहंतानब्रुवंतातबुभुक्षादुःसहाममम ३ दानंदास्यामिविधिवत्पूजयिष्यामिकेशवम् विनोपवासंलभ्येतकथमेकादशीव्रतम् ४ भीमसेनवचःश्रुत्वाव्यासोवचनमब्रवीत् व्यासउवाच यदिस्वर्गोत्यभीष्टस्तेनरकोदुष्टएवच ५ एकादश्यांनभोक्तव्यंपक्षयोरुभयोरपि भीमसेनउवाच पितामहमहाबुद्धेकथयामितवाग्रतः ६ एकभुक्तेनशक्तोहमुपवासःकुतोमुने वृकनामापियोवह्निःसस्सदाजठरेमम ७ अतीवार्थंयदाश्नामितदासमुपशाम्यति एकंशक्तोस्म्यहंकर्तुंचोपवासंमहामुने ८ येनैवप्राप्यतेस्वर्गस्तत्करोमियथातथम् तदेकंवदनिश्चित्ययेनश्रेयोहमाप्नुयाम् ९ व्यासउ० श्रुतास्तेमानवाधर्मावैदिकाश्चश्रुतास्त्वया कलौयुगेनशक्यंतेतेवैकर्तुंनराधिप १० सुखोपायंचाल्पधनमल्पक्लेशंमहाफलम् पुराणानांचसर्वेषांसारभूतंवदामिते ११ एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांनभुंक्तेयोनयातिनरकंतुसः १२ व्यासस्यवचनंश्रुत्वाकंपितोश्वत्थपत्रवत् भीमसेनोमहाबाहुर्भीतोवाक्यमभाषत १३ भीमसेनउवाच पितामहनशक्तोहमुपवासेकरोमिकिं ततोबहुफलंब्रूहिव्रतमेकंममप्रभो १४ व्यासउवाच वृषस्थेमिथुनस्थेयाशुक्लाह्येकादशीभवेत् ज्येष्ठमासेप्रयत्नेनसोपोष्याजलवर्जिता १५ स्नानेचाचमनेचैववर्जयित्वोदकंबुधः माषमात्रसुवर्णस्ययत्रमज्जतिवैमणिः १६ एतदाचमनंप्रोक्तंपवित्रंकायशोधनम् गोकर्णाकृतहस्तेनमाषमात्रंजलंपिबेत् १७ तन्न्यूनमधिकंपीत्वासुरापानसमंभवेत् उपयुंजीतनैवान्यंव्रतभंगोन्यथाभवेत्

१८ उदयादुदयंयावद्वर्जयित्वातथोदकम् अप्रयत्नादवाप्नोतिद्वादशद्वादशीफलम् १९ प्रभातेविमलेजातेद्वादश्यांस्नानमाचरेत् जलं
सुवर्णंदत्वाचद्विजातिभ्योयथाविधि २० भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितोवशी एवंकृतेतुयत्पुण्यंभीमसेनशृणुष्वतत् २१ संवत्सरस्य
यामध्येएकादश्योभवंतिवै तासांफलमवाप्नोति अत्रमेनास्तिसंशयः २२ इतिमांकेशवःप्राह शंखचक्रगदाधरः सर्वधर्मान्परित्यज्यमा
मेकंशरणंव्रज २३ एकादश्यांनिराहारन्नरःपापात्प्रमुच्यते द्रव्यशुद्धिःकलौनास्तिसंस्कारःस्मार्तएवच २४ वैदिकश्चकृतश्चास्तेप्रा
प्तेदुष्टेकलौयुगे किंतुतेबहुनोक्तेनवायुपुत्रःपुनःपुनः २५ एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांसितेपक्षेज्येष्ठस्योदकव
र्जितम् २६ उपोष्यफलमाप्नोतितच्छृणुष्ववृकोदर सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलम् २७ तत्फलंसमवाप्नोतिइमांकृत्वावृ
कोदर संवत्सरेचयाश्चस्युःशुक्लाःकृष्णावृकोदर २८ उपोषितास्ताःसर्वाःस्युरेकादश्योनसंशयः धनधान्यमहायुर्दाःपुत्रारोग्य
फलप्रदाः २९ उपोषितानरव्याघ्रइतिसत्यंवदामिते यमदूतामहाकायाःकरालाःकृष्णपिंगलाः ३० दंडपाशधरारौद्रानोपस
र्पंतितंनरम् पीतांबरधराःसौम्याश्चक्रहस्तामनोजवाः ३१ अंतकालेनयंत्येवमानवंवैष्णवींपुरीम् तस्मात्सर्वप्रयत्नेनसोपो
ष्योदकवर्जिता ३२ जलधेनुंतथादत्वासर्वपापैःप्रमुच्यते इतिश्रुत्वातदाचक्रुःपांडवाजनमेजय ३३ तथात्वमपिभूपालसोप
वासार्चनंहरेः कुरुत्वंचप्रयत्नेनसर्वपापप्रशांतये ३४ करिष्याम्यद्यदेवेशजलवर्जमुपोषणम् भोक्ष्येपरेह्निदेवेशद्वादश्यांवातव
वासरान् ३५ इत्युच्चार्यततोमंत्रमुपवासपरोभवेत् सर्वपापविनाशायश्रद्धादमसमन्वितः ३६ मेरुमंदरमानंतुस्त्रियोयत्पुरुषस्य

वा सर्वंतद्भस्मतांयातिएकादश्याःप्रभावतः ३७ सकांचनःप्रदातव्योघटोवस्त्रेणसंयुतः तोयस्यनियमंतस्यांकुरुतेयःसपुण्यभाक् ३८
पलकोटिसुवर्णस्ययामेयामेश्रुतेफलम् स्नानंदानंजपंहोमंयदस्यांकुरुतेनरः ३९ तत्सर्वंचाक्षयंप्रोक्तमेतत्कृष्णास्यभाषितम् किंवापरे
णधर्मेणनिर्जलैकादशींनृप ४० उपोषिताचविधिवद्वैष्णवंपदमाप्नुयात् सुवर्णमन्नंवासांसियदस्यांसंप्रदीयते ४१ तस्यैवचकुरु
श्रेष्ठसर्वंचाप्यक्षयंभवेत् एकादशीदिनेयोन्नंभुंक्तेपापंभुनक्तिसः ४२ इहलोकेसचांडालोमृतःप्राप्नोतिदुर्गतिम् येप्रदास्यंतिदानानि
द्वादशींसमुपोष्यच ४३ ज्येष्ठमासेसितेपक्षेप्राप्स्यंतिपरमंपदम् ब्रह्महामद्यपःस्तेनोगुरुद्वेषीसदानृती ४४ मुच्यंतेपातकैःसर्वै
र्द्वादशीयैरुपोषिता विशेषंशृणुकौंतेयनिर्जलैकादशीदिने ४५ यत्कर्तव्यंनरैःस्त्रीभिःश्रद्धादमसमन्वितैः जलशायीतुसंपूज्योदे
याधेनुश्चतन्मयी ४६ प्रत्यक्षंवानृपश्रेष्ठघृतधेनुमथापिवा दक्षिणाभिश्चश्रेष्ठाभिर्मिष्टान्नैश्चपृथग्विधैः ४७ तोषणीयाःप्र
यत्नेनद्विजाधर्मभृतांवर तुष्टोभवतिवैक्षिप्रंतैस्तुष्टैर्मोक्षदोहरिः ४८ आत्मद्रोहःकृतस्तैस्तुयैर्नैषासमुपोषिता पापात्मानोदु
राचाराहुष्टातेनात्रसंशयः ४९ कुलानांचशतंसाग्रमनाचाररतंसदा आत्मनासहसन्नीतंवासुदेवस्यमंदिरम् ५० शांतैर्दांतै
परैश्चैवअर्चद्भिश्चतथाहरिम् कुर्वद्भिर्जागरंरात्रौयैर्नरैःसमुपोषिता ५१ अन्नंपानंतथागावोवस्त्रंशय्यासनंशुभम् कमंडलुस्तथा
छत्रंदातव्यंनिर्जलादिने ५२ उपानहौचयोदद्यात्पात्रभूतेद्विजोत्तमे ससौवर्णेनयानेनस्वर्गलोकेव्रजेद्ध्रुवम् ५३ यश्चेमांशृणुयाद्भ
क्त्यायश्चापिपरिकीर्तयेत् उभौतौस्वर्गतौस्यातांनात्रकार्याविचारणा ५४ यत्फलंतुसिनीवाल्यांराहुग्रस्तेदिवाकरे कृत्वाश्राद्धंलभे

न्मर्त्यस्तदास्याः श्रवणादपि ५५ नियमंचप्रकुर्वीतदंतधावनपूर्वकम् एकादश्यांनिराहारोवर्जयिष्यामिवैजलम् ५६ केशवप्रीणनार्था
यअन्यथाचमनादृते द्वादश्यांदेवदेवेशः पूजनीयस्त्रिविक्रमः ५७ गंधपुष्पैस्तथादीपैर्वारिभिः प्रीणयेद्धरिम् पूजयित्वाविधानेनमंत्र
मेनमुदीरयेत् ५८ देवदेवहृषीकेशसंसारार्णवतारक उदकुंभप्रदानेननयमांपरमांगतिम् ५९ ततः कुंभाः प्रदातव्या ब्राम्हणेभ्यः
स्वशक्तितः सान्नावस्त्रयुताभीमछत्रोपानत्फलान्विताः ६० दानान्यन्यानिदद्यानिजलधेनुर्विशेषतः भोजयित्वाततोविप्रान् स्वयमु
जीतवाग्यतः ६१ एवंयः कुरुतेपूर्णांद्वादशींपापनाशिनीम् सर्वपापविनिर्मुक्तः पदंगच्छत्यनामयम् ६२ ततः प्रभृतिभीमेनकृ
तात्वेकादशीशुभा पांडवद्वादशीनाम्नालोकेख्याताबभूवह ६३ इतिश्रीब्रम्हवैवर्तपुराणेज्येष्ठशुक्लनिर्जलैकादशीमाहात्म्यंसं
पूर्णम् ७ अथआषाढकृष्णैकादशीकथा युधिष्ठिरउवाच ज्येष्ठशुक्लनिर्जलायामाहात्म्यंवैश्रुतंमया आषाढकृष्णपक्षे
तुकिन्नामैकादशीभवेत् १ कथयस्वप्रसादेनममाग्रेमधुसूदन श्रीकृष्णउवाच व्रतानामुत्तमराजन्कथयामितवाग्रतः २
सर्वपापक्षयकरंभुक्तिमुक्तिप्रदायकम् आषाढस्यासितपक्षेयोगिनीनामनामतः ३ एकादशीनृपश्रेष्ठमहापातकनाशिनी संसा
रार्णवमग्नानांपोतरूपासनातनी ४ जगत्त्रयेसारभूतायोगिनीतिनराधिप कथयामिकथांतस्याःपौराणींपापहारिणीम् ५ अलका
धिपतिर्नाम्नाकुबेरःशिवपूजकः तस्यासीत्पुष्पबटुकोहेममालीतिनामतः ६ तस्यपत्नीसुरूपाचविशालाक्षीतिनामतः सतस्यांस्नेहसं
युक्तःकामपाशवशंगतः ७ मानसात्पुष्पनिचयमानीयस्वगृहेस्थितः पत्नीप्रेमसमायुक्तोनकुबेरालयंगतः ८ कुबेरोदेवसदने

करोतिशिवपूजनम् मध्यान्हसमयेराजन्पुष्पाणिप्रसमीक्षते९ हेममालीस्वभवनेरमतेकांतयासह यक्षराट्प्रत्युवाचाथकालाति
क्रमकोपितः १० कस्मान्नायातिभोयक्षाहेममालीदुरात्मवान् निश्चयः क्रियतामस्यप्रत्युवाचपुनःपुनः ११ यक्षाऊचुः वनिताकामु
कोगेहेरमतेस्वेच्छयानृप तेषांवाक्यंसमाकर्ण्यकुबेरःकोपपूरितः १२ आव्हयामासतत्तूर्णंबटुकंहेममालिनम् ज्ञात्वाकालात्ययंसोपि
भयव्याकुललोचनः १३ आजगामनमस्कृत्यकुबेरस्याग्रतःस्थितः तंदृष्ट्वाधनदःक्रुद्धःकोपसंरक्तलोचनः १४ प्रत्युवाचरुषावि
ष्टःकोपात्प्रस्फुरिताधरः धनदउवाच रेपापदुष्टदुर्वृत्तकृतवान्देवहेलनम् १५ अतोभवश्वित्रयुक्तोवियुक्तःकांतयासदा अस्मा
त्स्थानादपध्वस्तोगच्छस्थानमथाधनम् १६ इत्युक्तेवचनेतेनतस्मात्स्थानात्सपातसः महादुःखाभिभूतश्चकुष्ठःपीडितविग्रहः १७
नवैतोयंनभक्ष्यंचवनेरोद्रेलभत्यसौ नसुखंदिवसेतस्यनिद्रांलभतेनिशि १८ छायायांपीडिततनुर्निदाघेत्यंतपीडितः शिवपूजाप्र
भावेनस्मृतिस्तस्यनलुप्यते १९ पातकेनाभिभूतोपिपूर्वकर्मस्मरत्यसौ भ्रममाणस्ततोगच्छन्हिमाद्रिंपर्वतोत्तमम् २० तत्रापश्यन्मु
निवरंमार्कंडेयंतपोनिधिं यस्यायुर्विद्यतेराजन्ब्रह्मणोदिनसप्तकम् २१ आश्रमंसगतस्तस्यऋषेर्ब्रह्मसदःसमम् ववंदेचरणोतस्यदूरतः
पापकर्मकृत् २२ मार्कंडेयोमुनिवरोदृष्ट्वातंकुष्ठिनंतदा परोपकरणार्थायसमाहूयेदमब्रवीत् २३ मार्कंडेयउवाच कस्मात्कुष्ठाभि
भूतस्त्वंकुतोनिंद्यतरोह्यसि इत्युक्तःप्रत्युवाचेत्थंमार्कंडेयेनधीमता २४ हेममाल्युवाच यक्षराजस्यानुचरोहेममालीतिनामतः
मानसात्पुष्पनिचयमानीयप्रत्यहमुने २५ शिवपूजनवेलायांकुबेरायसमर्पयत् एकस्मिन्दिवसेकाललोपश्चविहितोमया २६ पत्नी

सौख्यप्रसक्तेनकामव्याकुलचेतसा ततः क्रुद्धेनशप्तोहंराजराजेनवैमुने २७ कुष्ठाभिभूतःसंजातोविभक्तः कांतयासह अधुनात्व
सान्निध्यंप्राप्तोस्मिशुभकर्मणा २८ सतांस्वभावतश्चित्तंपरोपकरणक्षमाम् इतिज्ञात्वामुनिश्रेष्ठशाधिमांचकृतेनसाम् २९ मार्कं
डेयउवाच त्वयासत्यमिहप्रोक्तंनासत्यंभाषितंयतः अतोव्रतोपदेशंतेकरिष्यामिशुभप्रदम् ३० आषाढेकृष्णपक्षेत्वंयोगि
नीव्रतमाचर अस्यव्रतस्यपुण्येनकुष्ठात्त्वंमुच्यतेध्रुवम् ३१ इतिवाक्यंमुनेःश्रुत्वादंडवत्पतितोभुवि उत्थापितश्चमुनिनाबभूवा
तीवहर्षितः ३२ मार्कंडेयोपदेशनकृतंतेनव्रतोत्तमम् तद्व्रतस्यप्रभावेनदेवरूपोबभूवसः ३३ संयोगंकांतयालेभेबुभुजेसौख्यमुत्तम
म् ईदृग्विधंनृपश्रेष्ठकथितंयोगिनीव्रतम् ३४ अष्टाशीतिसहस्राणिद्विजान्भोजयतेतुयः तत्फलसमवाप्नोतियोगिनीव्रतकिन्नरः
३५ महापापप्रशमनीमहापुण्यफलप्रदा शुचौकृष्णेकादशीन्वकथितायोगिनीनृप ३६ इतिश्रीब्रम्हवैवर्ते आषाढकृष्णैकादशी-
योगिनीनाममाहात्म्यंसंपूर्णम् ७ अथआषाढशुक्लैकादशीकथा युधिष्ठिरउवाच आषाढस्यासितपक्षेकिन्नामैकादशी
भवेत् कोदेवःकोविधिस्तस्याएतदाख्याहिकेशव १ श्रीकृष्णउवाच कथयामिमहीपालकथामाश्चर्यकारिणी कथयामा
सयाब्रम्हानारदायमहात्मने २ नारदउवाच कथयस्वप्रसादेनविष्णोराराधनायमे आषाढशुक्लपक्षेतुकिन्नामैकादशीभ
वेत् ३ ब्रम्होवाच वैष्णवोसिमुनिश्रेष्ठसाधुपृष्टंकलिप्रियः नातःपरतरंलोकेपवित्रंहरिवासरात् ४ कर्तव्यंतुप्रयत्नेन-
सर्वपापापनुत्तये तस्मात्तेहंप्रवक्ष्यामिशुक्लाएकादशीव्रतम् ५ एकादश्याव्रतंपुण्यंपापघ्नंसर्वकामदम् नकृतंयैर्नरैर्लोके

तेनशानिरयेषिणः ६ पद्मानामेतिविख्यातानभस्यैकादशीमिता हृषीकेशप्रीतयेतुकर्तव्यंव्रतमुत्तमम् ७ कथयामितवाग्रेहंकथांपौरा
णिकींशुभां यस्याःश्रवणमात्रेणमहापापंप्रणश्यति ८ मांधातानामराजर्षिर्विवस्वद्वंशसंभवः बभूवचक्रवर्तीससत्यसंधःप्रतापवान् ९
धर्मतः पालयामासप्रजाःपुत्रानिवौरसान् नतस्यराज्येदुर्भिक्षंनाधयोव्याधयस्तथा १० निरातंकाःप्रजास्तस्यधनधान्यसमन्वि
ताः नान्यायोपार्जितद्रव्यंकोशेतस्यमहीपतेः ११ तस्यैवंकुर्वतोराज्यंबहुवर्षगणोगतः अथोकदाचित्संप्राप्तेविपाकेपापकर्म
णाः १२ वर्षत्रयंतद्विषयेनववर्षबलाहकः तेनोद्विग्नाःप्रजास्तत्रबभूवुःक्षुधयार्दिताः १३ स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः
बभूवुर्विषयास्तस्यसस्याभावेनपीडिताः १४ अथप्रजाःसमागत्यराजानमिदमब्रुवन् श्रूयतांवचनाद्राजन्प्रजानांहितकारक
म् १५ आपोनाराइतिप्रोक्ताःपुराणेषुमनीषिभिः अयनंताभगवतस्तेननारायणःस्मृतः १६ पर्जन्यरूपीभगवान्विष्णुःसर्वग
तःसदा सएवंकुरुतेविष्टिंवृष्टेरन्नंततःप्रजा १७ तदभावेननृपतेक्षयंगच्छंतिवैप्रजाः तथाकुरुनृपश्रेष्ठयोगक्षेमोयथाभवे
त् १८ राजोवाच सत्यमुक्तंभवद्भिश्चनमिथ्याभिहितंवचः अन्नंबम्हमयंप्रोक्तमन्नेसर्वंप्रतिष्ठितम् १९ अन्नाद्भवंतिभूतानि
जगदन्नेनवर्धते इत्येवंश्रूयतेलोकेपुराणेबहुविस्तरे २० नृपाणामपचारेणप्रजानांपीडनंभवेत् नाहंपश्याम्यात्मकृतंदोषंबु-
ध्याविचारयन् २१ तथापिप्रयतिष्यामिप्रजानांहितकाम्यया इतिकृत्वामतिंराजापरिमेयबलान्वितः २२ नमस्कृत्यविधाता
रंजगामगहनंवनम् चचारमुनिमुख्यानामाश्रमांस्तपसैधितान् २३ ददर्शाथब्रम्हसुतमृषिमंगिरसंनृपः तेजसाद्योतितदिशं

द्वितीयमिवपद्मजम् २४ तंदृष्ट्वाहृर्षतोराजाअवतीर्यचवाहनात् ननामचक्रेस्यचरणौकृतांजलिपुटोवशी २५ मुनिस्तमभिनंद्याथ-
स्वस्तिवाचनपूर्वकम् पप्रच्छकुशलंराज्येसप्तस्वंगेषुभूपतेः २६ निवेदयित्वाकुशलंपप्रच्छानामयंनृपः ततश्चमुनिनाराजापृष्टोा-
गमनकारणम् २७ अब्रवीन्मुनिशार्दूलंस्वस्यागमनकारणं राजोवाच भगवन्धर्मविधिनाममपालयतोमहीम् २८ अनावृष्टिःसं
प्रवृत्तानाहंवेद्म्यत्रकारणम् संशयच्छेजनार्थंत्वस्यागताहंतवांतिकम् २९ योगक्षेमविधानेनप्रजानांकुरुनिर्वृतिम् ऋषिरुवाच
एतत्कृतयुगंराजन्युगानामुत्तमंस्मृतम् ३० अत्रब्रम्होत्तरालोकाधर्मश्चात्रचतुष्पदः अस्मिन्युगेतपोयुक्ताब्राम्हणानेतरेजनाः ३१
विषयेतववराजेंद्रवृषलोयत्तपस्यति अकार्यकरणात्तस्यनवर्षतिबलाहकः कुरुतस्यवधेयत्नंयेनदोषःप्रशाम्यति ३२ राजोवाच
नाहमेनंवधिष्यामितपस्यंतमनागसम् धर्मोपदेशंकथयत्वुपसर्गविनाशनम् ३३ ऋषिरुवाच यद्येवंतर्हिनृपतेकुरुष्वैकादशीव्र
तम् शुचिमासेसितेपक्षेपद्मानामेतिविश्रुता ३४ तस्याव्रतप्रभावेनसुवृष्टिर्भवितांध्रुवम् सर्वसिद्धिप्रदाह्येषासर्वोपद्रवनाशि
नी ३५ अस्याव्रतंकुरुनृपसप्रजःसपरिच्छदः इतिवाक्यंमुनेःश्रुत्वाराजास्वगृहमागतः ३६ आषाढमासेसंप्राप्तेपद्मा
व्रतमथाकरोत् प्रजाभिःसहसर्वाभिश्चातुर्वर्ण्यसमन्वितः ३७ एवंकृतेव्रतेराजन्प्रववर्षबलाहकः जलेनप्लाविताभूमिरभ
वत्सस्यमालिनी ३८ हृषीकेशप्रसादेनजनाःसौख्यंप्रपेदिरे एतस्मात्कारणादेवकर्तव्यंव्रतमुत्तमम् ३९ भुक्तिमुक्तिप्रदंचैवलोका
नांसुखदायकम् पठणाच्छ्रवणादस्याःसर्वपापैःप्रमुच्यते ४० इयमेकादशीराजन्शयनीत्यभिधीयते विष्णोःप्रसादसिद्ध्यर्थमस्यां

चशयनव्रतम् ४१ कर्तव्यं राजशार्दूल जनैर्मोक्षेच्छुभिः सदा चातुर्मास्यव्रतारंभोप्यस्यामेव विधीयते ४२ युधिष्ठिर उवाच कथं कृ
ष्णप्रकर्तव्यं श्रीविष्णोः शयनव्रतम् तद्वद्धि कृपयादेव चातुर्मास्यव्रतानि च ४३ श्रीकृष्ण उवाच शृणु पार्थ प्रवक्ष्यामि गोविंदशय
नव्रतम् चातुर्मास्ये च यान्युक्तान्यासंस्तानि व्रतानि च ४४ कर्कराशिगते सूर्ये शुचौ शुक्ले तु पक्षके एकादश्यां जगन्नाथं स्वापयेन्मधु-
सूदनम् ४५ तुलाराशिस्थिते तस्मिन्पुनरुत्थापयेद्धरिम् अधिमासेपि पतिते एष एव विधिः क्रमात् ४६ नान्यथा स्वापयेद्देवं न चै
वोत्थापयेद्धरिम् आषाढस्यासिते पक्षे एकादश्यामुपोषितः ४७ चातुर्मास्यव्रतानां तु कुर्वीत परिकल्पनम् एवं च प्रतिमां विष्णोः
स्थापयित्वा युधिष्ठिर ४८ स्नापयेत्प्रतिमां विष्णोः शंखचक्रगदाधराम् पीतांबरधरां सौम्यां पर्यंके वै सिते शुभे ४९ सितवस्त्र
समाच्छन्ने सोपधाने युधिष्ठिर इतिहासपुराणज्ञो ब्राह्मणो वेदपारगः स्नापयित्वा दधिक्षीरघृतक्षौद्रसितादिभिः ५० समाले
प्य शुभैर्गंधैर्धूपैर्दीपैश्च भूरिशः पूजयेत्कुसुमैः शस्तैर्मंत्रेणानेन पांडव ५१ शायितस्त्वं हृषीकेश पूजयित्वा श्रिया सह प्रसा
दं कुरु देवेश लक्ष्म्या सह जनार्दन ५२ सुप्ते त्वयि जगन्नाथ जगत्सुप्तं चराचरम् एवं तां प्रतिमां विष्णोः स्थापयित्वा युधिष्ठिर ५३
तस्या एवाग्रतः स्थित्वा गृण्हीयान्नियमान्नरः चत्वारो वार्षिकान्मासान्देवस्योत्थापनावधि ५४ प्रातः संध्यादिकं सर्वं नित्यक
र्म समाप्य च गृहीष्ये नियमान् शुद्धान्निर्विघ्नं कुरु मे प्रभो ५५ इति संप्रार्थ्य देवेशं प्रह्वः संशुद्धमानसः स्त्री वा नरो वा मद्भक्तो
धर्मार्थं च धृतव्रतः ५६ गृण्हीयान्नियमानेतान्दंतधावनपूर्वकम् व्रतप्रारंभकालास्तु प्रोक्ताः पंचैव विष्णुना ५७ उपक्रमं

चतुर्मासव्रतानांचनरः शुचौ एकादशीद्वादशीचपौर्णिमांचतथाष्टमी ५८ कर्कटाचैवसंक्रांतिस्तेषुकुर्याद्यथाविधि चतुर्धागृह्यपेची
र्णंचातुर्मास्यव्रतंन्नरः ५९ कार्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत् तेषांफलानिवक्ष्यामिकर्तृणांचपृथक्पृथक् ६० आषाढेशुक्लपक्षेतुए
कादश्यामुपोषितः चातुर्मास्यव्रतंकुर्याद्यत्किंचिदवनीपते ६१ नान्यथाचाब्दकंपापंविनिहंतिप्रयत्नतः नरोशेशवनमोद्यंचशुक्रगु
र्वोर्निवार्धकम् ६२ खंडत्वेचिंतयेदादौचातुर्मास्यविधौनरः खंडांगव्यापिमार्तंडोयद्यखंडाभवेत्तिथिः ६३ अशुचिर्वाशुचिर्वापियदिस्त्रीयदि
वापुमान् व्रतमेकंनरः कृत्वामुच्यतेसर्वपातकैः ६४ असंक्रांतंतथामासंदैवेपित्र्येचकर्मणि मलरूपमशौचंचवर्जयेन्मतिमान्नरः ६५
प्रतिवर्षंतुयः कुर्याद्व्रतंवैसंस्मरन्हरिम् देहांतेतिप्रदिप्तेनविमानेनार्कतेजसा ६६ मोदतेविष्णुलोकेसोयावदाभूतसंप्लवम् देवतायत
नेनित्यमार्जनजलसेचनम् ६७ प्रलेपयंगोमयेनरंगवल्यादिकंतथा यः करोतिनरः श्रेष्ठश्चातुर्मास्यमतंद्रितः ६८ समाप्तौचयथाशक्त्या
कृत्वाब्राम्हणभोजनम् सप्तजन्मसुविप्रेंद्रः सत्यधर्मपरोभवेत् ६९ दध्नाक्षीरेणचाज्येनक्षौद्रेणसितयातथा स्नापयेद्विधिनादेवंचा-
तुर्मास्येजनाधिप ७० सयातिविष्णुसारूप्यंसुखमक्षय्यमश्नुते नृपेणभूमिर्दातव्यायथाशक्त्याचकांचनम् ७१ विप्रायदेवमुद्दिश्यसफ
लंचसदक्षिणम् अक्षय्यांल्लभतेभोगान्स्वर्गइंद्रइवापरः ७२ लोकेचसमवाप्नोतिविष्णोरत्रनसंशयः देवायहेमपद्मंतुदद्यान्नैवेद्यसंयुतम्
७३ गंधपुष्पाक्षताद्यैर्योदेवब्राम्हणयोरपि पूजांयः कुरुतेनित्यंचातुर्मास्येव्रतीनरः ७४ अक्षय्यंसुखमाप्नोतिपुरंदरपुरंव्रजेत् य
स्तुवैचतुरोमासान्तुलस्याहरिमर्चयेत् ७५ तुलसींकांचनींकृत्वाब्राम्हणायनिवेदयेत् कांचनेनविमानेनवैष्णवींलभतेगतिम्

७६ देवायगुग्गुलंयोवैदीपंचार्पयतेनरः सभोगीजायतेश्रीमान्तथासौभाग्यवानपि ७७ समासेधूपिकांदद्याद्दीपिकांचमहामते
प्रदक्षिणांतुयःकुर्यान्नमस्कारंविशेषतः ७८ अश्वत्थःस्यादथवाविष्णोःकार्तिक्यामवधिर्भवेत् पादंपादांतरेन्यस्यकरौकृत्वाचसंयुतौ
७९ स्तुतिवाचित्त्हृदिज्ञानंचतुरंगांप्रदक्षिणाम् संध्यादीपप्रदोयस्तुप्रांगणेद्विजदेवयोः ८० समासेदीपकंदद्याद्रुक्मंचैलंचकांचन
म् वायुमालभतेयस्तुतेजस्वीसभवेदिह ८१ वैमानिकोभवेद्देवोगंधर्वाप्सरसेवितः विष्णुपादोदकंयस्तुपिबेच्छ्रद्धासमन्वितः ८२
विष्णोर्लोकमवाप्नोतिनचास्मिन्जायतेनरः शतमष्टोत्तरंयस्तुगायत्रीजपमाचरेत् ८३ त्रिकालेवैष्णवेह्यस्मिन्सनपापेनलिप्यते अ
क्षसूत्रपुस्तकंचधत्तेपद्मंकमंडलुम् ८४ चतुर्वक्त्रातुगायत्रीश्रोत्रियाणांगृहेस्थिता सर्वलोकमयीदेवीगायत्रीयात्रयीमयी नि
त्याशास्त्रसमाख्यातालोकान्यातुप्रबोधयेत् ८५ व्यासस्तुष्यतिनस्यासःविष्णुलोकंसगच्छति अत्रचोद्यापनेशास्त्रपुस्तकंदानमे
वच ८६ सर्वविद्यासमंशांतकरणंललिताक्षरम् पुस्तकंसंप्रयच्छाभिप्रीताभवतुभारती ८७ पुराणंशृणुयान्नित्यंधर्मशास्त्रमथापि
वा पुण्यवान्धनवान्भोगीसत्यशौचपरायणः ८८ ज्ञानवान्लोकविख्यातोबहुशिष्यःसुधार्मिकः कांचनेनयुतंपुण्यंपुस्तकंचनि
वेदयेत् ८९ नाममंत्रव्रतपरःशंभोर्वाकेशवस्यवा समासेप्रतिमांदद्यात्तस्यदेवस्यकांचनीम् ९० पंचवक्त्रोवृषारूढःप्रतिवक्त्रत्रि
लोचनः कपालशूलखट्वांगीचंद्रमौलिःसदाशिवः ९१ त्वयासुराणाममृतंविहायहालाहलंसंहृतमेवयस्मात् तथासुराणांत्रिपुरं
चदग्धमेकेषुणालोकहितार्थमीश ९२ तद्रूपदानाद्बहुपुण्यवांश्चदोषैर्वियुक्तश्चगुणालयोहम् तथाकुरुत्वांशरणंप्रपद्येममप्रभो

देववरप्रसीद ९३ कृतनित्यक्रियो भूत्वा सूर्यायार्घ्यं निवेदयेत् सूर्यमंडलमध्यस्थं देवं ध्यात्वा जनार्दनम् ९४ समाप्तौ कांचनं दद्याद्रुक्मव
स्त्रं च गां तथा आरोग्यपूर्णमायुश्च कीर्तिलक्ष्मीबलं लभेत् ९५ तिलहोमं तु यः कुर्याच्चातुर्मास्ये दिने दिने भक्त्या व्याहृतिभिर्मंत्रैर्गायत्र्या
वा व्रतान्वितः ९६ अष्टोत्तरशतं चाथ अष्टाविंशतिरेव वा तिलपात्रं समाप्तौ तु दद्याद्विप्राय धीमते ९७ वाङ्मनःकायजनितैः पापैर्मुच्येत सं
चितैः न गेहे रभिभूयेत लभेत्संततिमुत्तमाम् ९८ देवदेव जगन्नाथ वांछितार्थफलप्रद तिलपात्रं प्रदास्यामि तेन पापं व्यपोहतु ९९ अ
न्नहोमं तु यः कुर्याच्चातुर्मास्यमतंद्रितः समाप्तौ घृतकुंभं तु वस्त्रकांचनसंयुतम् १०० आरोग्यं कांतिमतुलां पुत्रसौभाग्यसंपदः शत्रु
क्षयं च लभते ब्रम्हणा प्रतिमो भवेत् १०१ अश्वत्थसेवां यः कुर्यात्सर्वपापैः प्रमुच्यते विष्णुभक्तो भवेत्तस्मात् तेन वस्त्रं प्रदापयेत् १०२ स
कांचनं ब्राम्हणाय नैव रोगान्स विंदते तुलसीं धारयेद्यस्तु विष्णुप्रीतिकरां शुभाम् १०३ विष्णुलोकमवाप्नोति सर्वपापैः प्रमुच्यते ब्राम्ह
णान्भोजयेत्तस्माद्विष्णुमुद्दिश्य पाडव ४ यस्तु स्पृशेत् हृषीकेशे दूर्वाममृतसंभवाम् सदा प्रातर्वहेन्मूर्ध्नि शक्त्यात्मा वक्रतुंडयं ५ मंत्रेणानेन राजेंद्र
लक्ष्मीनाथस्य तुष्टये त्वं दूर्वे अमृतजन्मासि वंदितासि सुरासुरैः १०६ सौभाग्यसंततिं दत्वा सद्यः कार्यकरी भव व्रतांते च कुरु श्रेष्ठ दूर्वां स्व
र्णविनिर्मिताम् १०७ सार्धसर्वदलोपेतां सवस्त्रां द्विजपुंगवे प्रदद्याद्दक्षिणासार्धं मंत्रेणानेन सुव्रत १०८ यथा शाखा प्रशाखाभि
र्विस्तृतासि महीतले तथा ममापि संतानं देहि त्वमजरामरम् १०९ एवं व्रतं यः कुर्वीत चातुर्मास्यमतंद्रितः न च दुःखभयं तस्य न
च रोगभयं भवेत् ११० नाशुभं प्राप्नुयाज्जातु पापेभ्यः प्रविमुच्यते भुक्त्वा तु सकलान्भोगान् स्वर्गलोके महीयते १११ गीतं तु देवदे

वस्यकेशवस्यशिवस्यवा करोतिनित्यमाप्नोति नरोजागरणेफलम् १२ व्रतांतेचव्रतीदद्यात् घंटांदेवायसुस्वराम् गुरोरवज्ञयायच्चानध्या
येध्ययनंकृतम् १३ सरस्वतीजगन्माथजगज्जाड्यापहारिणी साक्षाद्ब्रह्मकलत्रंचविष्णुरुद्रादिभिःस्तुता १४ तन्मभाध्यय
नोत्पन्नंजाड्यंहरवरानने घंटादानेनतुष्टात्वंब्रह्माणीलोकपालिनी १५ विप्रपादविनिर्मुक्तंतोयंयःप्रत्यहंपिबेत् चातु
र्मास्येनरोभक्त्यामहापापंब्राम्हणस्मरन् १६ मनोवाक्कायजनितैर्मुक्तोभवतिकिल्बिषैः व्याधिभिर्नाभिभूयेतश्रीरायुस्त
स्यवर्धते १७ समाप्तौगोयुगंदद्याद्धामिकांवापयस्विनीम् तन्नाप्यशक्तोराजेंद्रदद्याद्वासोयुगंव्रती १८ ब्राम्हणंवेदतेयस्तुस
र्वदेवमयस्मृतम् कृतकृत्यौभवेत्सद्यःसर्वपापैःप्रमुच्यते १९ अक्षय्यंसुखमाप्नोतिपितृभक्तिपरोनरः समाप्तौभोजयेद्विप्राना
सुर्विन्नंचविंदति २० संध्यामानंतरःकृत्वासमाप्तौघृतकुंभदः वस्त्रयुग्मंतिलान्घंटांब्राम्हणायनिवेदयेत् २१ सारस्वतव्या
तितत्वंविद्यावांस्तुभवेदिति संस्पृशेत्कपिलांयोवैनित्यंभक्तिसमन्वितः २२ तामेवालंकृतांदद्यात्सर्वांभूमिमथापिवा सा
र्वभौमोभवेद्राजादीर्घायुश्चप्रतापवान् २३ दानशीलःसदारंभःसर्वकंटकवर्जितः रूपवान्भाग्यसंपन्नोलभतेसुखम
क्षयम् २४ सवसेद्दिव्यवत्स्वर्गेवत्सरानरोमसंमितान् नमस्करोतियःसूर्यंगणेशंवापिनित्यशः १२५ आयुरारोग्यमैश्व
र्यंलभतेकांतिमुत्तमाम् विघ्नराजप्रसादेनप्राप्नुयादीप्सितंफलम् २६ सर्वत्रविजयंचैवनात्रकार्याविचारणा रविःकार्यःसुव
र्णस्यसिंदूरारुणसन्निभः २७ निवेदयेद्ब्राम्हणायसर्वकामार्थसिद्धये उरसाशिरसाहस्ताभ्यांमनसावचसातथा २८ पद्भ्यांक

ए॰मा॰
२५

राभ्यांजानुभ्यांप्रणामोष्टांगउच्यते अष्टांगसहितेनापिनमस्कारेणयोर्चयेत् २९ सयांगतिमवाप्नोतिनतांक्रतुशतैरपि यस्तु
रौप्यंशिवप्रीत्यैदद्याद्दर्षांक्रतुहृये ३० ताम्रंवाप्रत्यहंदद्यात्स्वशक्त्याशिवतुष्टये सुरूपांल्लभतेपुत्रान्रुद्रभक्तिपरायणान् १३१
समासोमधुपूर्णंतु पात्रंराजतमुत्तमम् प्रदद्यात्ताम्रदानेनुताम्रपात्रंगुडान्वितम् ३२ ताम्रंपुष्टिकरंदेवदेवप्रीतिकरंशुभम्
सर्वरक्षाकरंनित्यमतःशांतिंप्रयच्छमे ३३ यस्तुसंप्रेत्यहृषीकेशेस्वर्णदानंस्वशक्तितः वस्त्रयुग्मतिलैःसार्धंदत्वापापैःप्रमु
च्यते ३४ इहभुक्त्वामहाभोगानंतेशिवपुरंव्रजेत् सुवर्णंरजतंताम्रंनित्यंधान्यंचधान्यकम् ३५ नित्यश्राद्धंदेवपूजांस
र्वमेतत्सदक्षिणम् वस्त्रदानंतुयःकुर्याच्चातुर्मास्येद्विजायते ३६ अभ्यर्च्यगंधपुष्पाद्यैःसविष्णुःप्रीतयामिति शय्यांद
द्यात्समाप्तौतुवासःकांचनपट्टिकाम् ३७ अक्षय्यंसुखमाप्नोतिधनंचधनदोपमं योगोपीचंदनंदद्यान्नित्यंवर्षासुमानवः ३८
श्रीपतिस्तस्यसंतुष्टोभुक्तिंमुक्तिंददातिच यद्वैदेवागसंस्पृष्टंकुंकुमादिविलेपनम् ३९ जलक्रीडासुगोपीनांहारवत्यामृदा-
न्वितं गोपीचंदनमित्युक्तंमुनींद्रैःकिल्बिषापहम् ४० तस्मादेयंप्रयत्नेनविष्णुर्दिशतिवांछितम् समाप्तावर्पितंदद्यात्तुलापूरि
मितंशुभम् ४१ तदर्धंवातदर्धंवासवस्त्रंचसदक्षिणम् यस्तुसंप्रेत्यहृषीकेशेप्रत्यहंनुव्रतान्वितः ४२ दद्याद्दक्षिणपायासार्धंश
र्करामपिवागुडम् अमृतस्यकलाप्रोक्ताइक्षुसारजशर्करा ४३ तस्यादानेनसंतुष्टोभानुर्दिशतिवांछितम् एवंव्रतेतुसंपूर्णे
कुर्यादुद्यापनंबुधः ४४ कांस्यंत्ताम्रपत्राणिप्रत्येकंतुपलाष्टकम् वित्तशाठ्यमकुर्वाणोयद्वापलचतुष्टयम् ४५ अथवा

आ॰कृ॰
११

२५

त्वार्यथैकंवाप्रत्येकंचसशर्करम् दक्षिणाफलवस्त्रेणप्रत्येकंवेष्टितानिच ४६ सहधान्यानिविप्रेभ्यः श्रद्धयाप्रतिपादयेत् ताम्रपात्रं
सवस्त्रंचशर्कराहेमसंयुतम् ४७ सूर्यप्रीतिकरंयस्माद्रोगघ्नपापनाशनम् पुष्टिदंकीर्तिदंनृणांनित्यंसंतानकारकम् ४८ सर्वकामप्र
दंस्वर्ग्यमायुर्वर्धनमुत्तमम् तस्मादस्यप्रदानेनकीर्तिरस्तुसदामम ४९ एवंव्रतंतुयः कुर्यात्तस्यपुण्यफलंशृणु गंधर्वविद्यासंपन्नः
सर्वयोषित्प्रियोभवेत् ५० राज्यार्थीलभतेराज्यंपुत्रार्थीलभतेसुतान् अर्थार्थीप्राप्नुयादर्थंनिष्कामोमोक्षमाप्नुयात् ५१ यस्तु
वैचतुरोमासान्शाकमूलफलादिकम् नित्यंददातिविप्रेभ्यः शक्त्यायत्संभवेद्द्विजः ५२ व्रतांतेवस्त्रयुग्मंचशक्त्याद्द्यात्स
दक्षिणम् सुखीभूत्वाचिरंकालंराजयोगीभवेन्नरः ५३ सर्वदेवप्रियंयस्माच्छाकतृप्तिकरंनृणां देवर्षिप्रीतिदंकंदमूलपत्रस
पुष्पकम् ५४ ददामितेनदेवाद्याः सदाकुर्वंतुमंगलम् यस्तुसुमंतद्दर्षीकेशप्रत्यहंतुऋतुद्वये ५५ दद्यात्कटुत्रयंमर्त्योगृहप्रयो
तमादरात् ब्राह्मणायसुशीलायदिनेशप्रीतयेनघ ५६ दक्षिणासहितंविप्रमंत्रेणाननसुव्रत कटुत्रयमिदंयस्माद्रोगघ्नंसर्वदेहि
नाम् ५७ तस्मादस्यप्रदानेनप्रीतोभवतुभास्करः एवंकृत्वाव्रतंसम्यक्कुर्यादुद्यापनंबुधः ५८ कृत्वास्वर्णमयींशुंठींमरीचींमग
धीमपि सवस्त्रांदक्षिणायुक्तांदद्याद्विप्रायधीमते ५९ एवंव्रतंयः कुरुतेसजीवेच्छरदांशतम् प्राप्नुयादीप्सितानर्थानंतेस्वर्गं
व्रजेद्दिनि ६० मुक्ताफलानियोनित्यंदद्याद्विप्रायसन्मतिः अन्नवान्कीर्तिमान्श्रीमान् जायतेवसुधाधिप ६१ चातुर्मास्यप्र
त्यहंतुक्षीरकुंभंप्रदापयेत् वेष्टयित्वासुवस्त्रेणफलैर्दक्षिणयासह ६२ सुवाशिनीप्रियंमत्वागंधपुष्पैरथार्चयेत् तांबूलंफल

मेकंवादद्याद्व्रतोद्यापनतयेपुनः ६३ समासौयोषितंविप्रंसूक्ष्मवस्त्रविभूषणैः मिथुनंपूजयित्वातुजातीपुष्पैःसुशोभनैः ६४ पुमांस्तुश्रिय
माप्नोतिनारीभर्त्तारमाप्नुयात् पुमांस्तुश्रियमाप्नोतिकमलामिवमाधवः ६५ तांबूलदानंयःकुर्याद्वर्जयेद्वाजितेंद्रियः रक्तवस्त्रद्वयंदद्या
त्करकंचसदक्षिणम् ६६ महालावण्यमाप्नोतिसर्वरोगविवर्जितः मेधावीसुभगःप्राज्ञोरक्तकंठश्चजायते ६७ गंधर्वत्वमवाप्नोतिस्वर्ग
लोकंचगच्छति तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकम् ६८ अस्यप्रदानाद्ब्रह्माद्याःश्रियंददतुपुष्कलाम् पूगोब्रह्माहरिःपत्रेचू
र्णोसाक्षान्महेश्वरः ६९ एतेषांसंप्रदानेनसंतुमेभाग्यसंपदः पूरितंपूगचूर्णेननागवल्लीदलान्वितम् ७० सचूर्णंखादिरंचैवपत्रीफलसमन्वि
तम् एलालवंगसंमिश्रंगंधर्वाप्सरसांप्रियम् ७१ कनकत्वंनिरातंकंत्वत्प्रसादात्कुरुष्वमाम् चातुर्मास्यव्रतोपेतःसुवासिन्यैद्विजायच ७२
नारीवापुरुषोवापिहरिद्रांसंप्रयच्छति लक्ष्मीमुद्दिश्यगौरींवा तत्पात्रंदक्षिणान्वितम् ७३ प्रदद्याद्भक्तिसंयुक्तःदेवीमेप्रियतामिति भ
र्त्रासहसुखंभुंक्तेनारीनार्यास्तथापुमान् ७४ सौभाग्यमक्षयंधान्यंधनपुत्रसमुन्नतिम् संप्राप्यरूपलावण्यंदेवीरूपेमहीयते ७५
उमामहेशमुद्दिश्यचातुर्मास्येदिनेदिने संपूज्यविप्रमिथुनंतस्मैविभायशक्तितः ७६ दद्यात्सदक्षिणांहैमंउमेशःप्रीयतामिति उमे
शप्रतिमांहैमींदद्यादुद्यापनेबुधः ७७ पंचोपचारैःसंपूज्यधेन्वाचवृषभेणच भोजयेद्दंपिमिष्टान्नंतस्यपुण्यफलंशृणु ७८ सौ
भाग्यंपूर्णमायुष्यंसंपत्तिश्चानपायिनी संपत्तिरक्षयाकीर्तिर्जायतेव्रतवैभवात् ७९ इहभुक्त्वाखिलान्कामानंतेशिवपुरंव्रजेत् त
त्रस्थित्वाचिरंकालमुपभुज्यसुखंमहत् ८० पुण्यशेषादिहागत्यजायतेधरणीपतिः फलदानंतुयःकुर्याच्चातुर्मास्यफलंद्वितः

८१ समासौकालयौतानितानिदद्याद्द्विजायते सर्वान्मनोरथान्प्राप्य संततिंचानपायिनीम् ८२ फलदानस्य माहात्म्यान्मोदतेनंदनेव
ने पुण्यदानव्रतेचापिस्वर्णपुष्पादिदापयेत् ८३ ससौभाग्यंपरंप्राप्यगंधर्वपदमाप्नुयात् वासुदेवेप्रसन्नेचचातुर्मास्यमतद्व्रतः ८४ नि
त्यंवामनमुद्दिश्यदध्यन्नंस्वादुषड्रसैः भोजयेदथवादद्यादेकादश्यांनभोजयेत् ८५ दानमेवप्रकुर्वीतग्रहणादौतथैवच अशक्तोनित्य-
दानेतुकुर्यात्सवसुपर्वसु ८६ भूताष्टम्याममायांचपूर्णिमायांतथापिच प्रत्यर्कवारमथवाप्रतिभार्गववासरम् ८७ पक्षद्वयेपिद्वा
दश्यांनिवश्यंदानमिष्यते एवंकृत्वासमाप्नोतुयथाशक्तिमहींददेत् ८८ अशक्तोभूमिदानेतुधेनुंदद्यादलंकृताम् तत्राप्यशक्तोवा
सश्चसकृवपादुकेतथा ८९ छत्रोपानद्युगयुतंदानंसर्वप्रशस्यते द्विजानांभोजनंचैवक्षत्रियस्ययथासुखम् भूम्यादिमुनिशार्दूल
वैश्यस्यवसुधांविना ९० ब्राम्हणस्यापिशक्तस्य शूद्रस्यापितथामतं कुबेरेणपुराचीर्णंशंकरस्योपदेशतः ९१ जन्हुनागौतमेना
पिशक्रेणापिशतंपुरा अक्षय्यमन्नमाप्नोतिपुत्रपौत्रादिसंपदम् ९२ दृढांगःपूर्णमायुष्यंलभतेवैरिनाशनम् सस्थिरांविष्णु
भक्तिंचप्रयातिहरिमंदिरम् ९३ आरोग्यंसौख्यमतुलंरूपसंपत्तिमेवच अवंध्याकर्तृकंचेदमनंतफलदायकम् ९४ नित्यंपयस्विनींद-
द्यात्सालंकारांशुभावहाम् दत्वातु दक्षिणांशक्त्यासस्सर्वज्ञानवान्भवेत् नपरंप्यतांयातिब्रम्हलोकेचगच्छति अक्षय्यंसुखमाप्नो
तिपितृभिःसहितोनरः ९६ वार्षिकान्चतुरोमासान्प्राजापत्यंचरेन्नरः समासौगोयुगंदद्यात्कृत्वाब्राम्हणभोजनम् ९७ सर्वपाप
विशुद्धात्मायातिब्रम्हसनातनम् एकांतरोपवासेतुसीराण्यष्टौप्रदापयेत् ९८ वस्त्रकांचनयुक्तानिशय्यंयासहभामिनी अनडुह्

यसंयुक्तंलांगलंकर्षणाक्षमम् ९९ सर्वोपस्करसंयुक्तंददामिप्रीयतांहरिः शाकमूलफलैर्वापिचातुर्मास्येनयेन्नरः २०० समाप्तेगो-
प्रदानेनसगच्छेद्विष्णुमंदिरम् पयोव्रतीतथाप्नोतिब्रम्हलोकंसनातनम् १ व्रतांतेचतथादद्याद्गामेकांचपयस्विनाम् रंभायांच-
पलाशेषुयोभुंक्तेचक्रतुद्वये २ वस्त्रयुग्मंचकांस्यंचशक्त्यादद्यात्सुखीभवेत् कांस्येब्रम्हाशिवोलक्ष्मीः कांस्यमेवविभावसुः
३ कांस्येविष्णुमयंयस्मादतःशांतिंप्रयच्छमे नित्यंपलाशभोजीच्चतैलाभ्यंगविवर्जितः ४ सदहत्यतिपापानितूलाराः
शिमिवानलः ब्रम्हघ्नश्चसुरापश्चबालघातकरश्चयः ५ असत्यवादिनोयेचस्त्रीघातीव्रतघातकः अगम्यागामिनश्चै
वविधवागामिनस्तथा ६ चांडालीगामिनश्चैवविप्रस्त्रीगामिनस्तथा तेसर्वपापनिर्मुक्ताव्रतेनानेनकेशव ७ समाप्तौकांस्यपात्रं
तुचतुःषष्टिपलैर्युतम् सवत्सांगांचयोदद्यात्सालंकारांपयस्विनीम् ८ अलंकृतायविदुषेसवस्त्रायसुवेषिणे भूमौविलिप्ययो
भुंक्तेदेवंनारायणंस्मरन् ९ दद्याद्भूमिंयथाशक्तिकृष्यांबहुजलांतिके आरोग्यपुत्रसंपन्नोराजाभवतिधार्मिकः २१० श
त्रोर्भयंनलभतेविष्णुलोकंसगच्छति अयाचितेत्वनड्वाहंसहिरण्यंसचंदनम् ११ षड्रसंभोजनंदद्यात्सयातिपरमांगतिम्
यस्तुसुप्तेहृषीकेशेनक्तंचकुरुतेव्रतम् १२ ब्राम्हणान्भोजयेत्सम्यक्शिवलोकेमहीयते एकभुक्तंनरःकृत्वामिताशीचदृढव्रतः १३
यश्चयेच्चतुरोमासान्वासुदेवसनाकभाक् समाप्तौभोजयेद्विप्रान्शक्त्याददाद्दक्षिणाम् १४ यस्तुसुप्तेहृषीकेशेक्षिति-
शायीभवेन्नरः शय्यांसोपस्करांदद्याच्छिवलोकेमहीयते १५ पादाभ्यंगंनरोयस्तुवर्जयेच्चक्रतुद्वये पादाभ्यंगंनरःकुर्या

त् ब्राम्हणानांच भोजनम् १६ दक्षिणांचयथाशक्त्या सगच्छेद्विष्णुमंदिरम् आषाढादिचतुर्मासान् वर्जयेन्नखकृंतनम् १७ आरोग्यपु
त्रसंपन्नो राजा भवतिधार्मिकः पायसंलवणंचैवमधुसर्पिःफलानिच १८ चातुर्मास्येवर्जयतिगौरीशंकरतुष्टये कार्तिक्यांचपुनस्तानि
ब्राम्हणायनिवेदयेत् १९ सरुद्रलोकमाप्नोति रुद्रव्रतनिषेवणात् यवान्नंभक्षयेद्यस्तु अथवाशालयःशुभाः २० पुत्रपौत्रादिभिः
सार्धं शिवलोकेमहीयते तैलाभ्यंगपरित्यागी विष्णुभक्तःसदाव्रती २१ वर्षासु विष्णुमभ्यर्च्य वैष्णवोलभतेगतिम् समासो
कांस्यपात्रंचस्कृवर्णेनसमन्वितम् २२ तैलेनपूरितंकृत्वाब्राम्हणायनिवेदयेत् वार्षिकान् चतुरोमासान् शाकादिपरिवर्जयेत् २३
विष्णुलोकमवाप्नोति पितृतृप्तिःप्रजायते व्रतांतेहरिमुद्दिश्यपात्रंराजतमेवहि २४ शाकेनवेष्टयेद्गंधपत्रपुष्पैःसमर्चयेत् मू
लपत्रकरीराग्रफलकांडादिरूढकाः २५ त्वक्पुष्पंकवचंचेतिशाकमष्टविधंस्मृतम् समभ्यर्च्ययथाशक्त्याब्राम्हणान् वेदपार
गान् २६ दद्याद्दक्षिणयासार्धं व्रतसंपूर्णहेतवे शिवसायुज्यमाप्नोति प्रसादाच्छूलपाणिनः २७ अपूपवर्जनंकृत्वाभोजनव्रत
माचरेत् कार्तिकेस्वर्णगोधूमान्वस्त्रंदत्वाश्वमेधकृत् २८ गोधूमाःसर्वजंतूनांबलपुष्टिविवर्धनाः मुख्याश्चहव्यकव्येषुत
स्मात्स्वेदद्वतःश्रियम् २९ आषाढादिचतुर्मासान् वृंताकंवर्जयेन्नरः कारवल्लीफलंवापिआलाबुपडलंतथा ३० यद्यत्फलंप्रि
यंवापिवर्जयित्वातुतत्फलम् चातुर्मास्यैततोवृत्ते रौप्यान्येतानिकारयेत् ३१ मध्येविद्रुमसंयुक्तानितान्यर्च्ययित्वातुशक्तितः द
द्याद्दक्षिणयासार्धं ब्राम्हणायातिभक्तितः ३२ अभीष्टंदेवमुद्दिश्य देवोमेप्रीयतामिति सदीर्घमायुरारोग्यपुत्रपौत्रान्समृ

पताम् ३३ अक्षयां संततिं कीर्तिं लब्ध्वा स्वर्गे महीयते फलत्यागी भवेद्यस्तु विष्णुलोके स पूज्यते ३४ समासेो कालधौतानि तानि दद्या
द्द्विजायते श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ३५ दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् चत्वार्येतानि नित्यानि चतुराश्रम
वर्तिनाम् ३६ प्रथमे मासि कर्तव्यं नित्यं शाकव्रतं नरैः द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमम् ३७ पयोव्रतं तृतीये तु चतुर्थे द्विदलं त
था कूष्मांडं राजमाषांश्च मूलकं गृंजकं तथा ३८ करमर्दं चेक्षुदंडं चातुर्मास्ये त्यजेन्नरः मसूरं बहुबीजं च वृंताकं चैव वर्जयेत् ३९
नित्यान्येतानि विप्रेंद्र व्रतान्याहुर्मनीषिणः विशेषादुदुंबरीं धात्रीं मालां बुं चिंचिणीं त्यजेत् २४० चीर्णे धात्री फलं ग्राह्यं जीर्णा ग्राह्या
च चिंचिणी वार्षिकांश्चतुरो मासान्प्रसुप्ते च जनार्दने ४१ मंचखट्वादिशयनं वर्जयेद्भक्तिमान्नरः अनृतौ वर्जयेद्भार्यां कृतो ग
च्छन्न दुष्यति ४२ मधुवल्लीं च शिग्रुं च चातुर्मास्ये त्यजेन्नरः वृंताकं च कलिंगं च बिल्वोदुंबरभिःसटाः ४३ उदरे यस्य जीर्यंते त
स्य दूरतरो हरिः उपवासस्तथा नक्तमेकभक्तमयाचितम् ४४ अशक्तस्तु यथा कुर्यात्सायंप्रातरखंडितम् स्नानपूजादिसंयु-
क्तः सनुरो हरिलोकभाक् ४५ गीतवाद्यकरो विष्णोर्गांधर्वं लोकमाप्नुयात् मधुफक्कुच भवेद्राजा पुरुषो गुडवर्जनात् ४६ लभेच्च संत
तिं दीर्घां पुत्रपौत्रादिवर्धिनीम् तैलस्य वर्जनाद्राजन् सुंदरांगः प्रजायते ४७ कौसुंभतैलसत्यागाच्छत्रुनाशमवाप्नुयात् मधूक
तैलत्यागाच्च स्कसौभाग्यफलं लभेत् ४८ पुष्पादिभोगत्यागेन स्वर्गे विद्याधरो भवेत् योगाभ्यासी भवेद्यस्तु स ब्रह्मपदवीमियात् ४९
कटुतिक्तं च मधुरं कषायलवणान् रसान् वर्जयेत्स च वै रूप्यं दौर्गंध्यं नाप्नुयात्सदा २५० तांबूलवर्जनाद्भोगी सद्यो मुक्तामयो भवेत्

पादाभ्यंगपरित्यागाच्छिरोभ्यंगस्यपार्थिव ५१ दीप्तिमान्दीप्तिकरणोयक्षद्रव्यपतिर्भवेत् दधिदुग्धपरित्यागोगोलोकंलभतेन
रः ५२ इहलोकमवाप्नोतिस्थालीपाकविवर्जनात् एकांतरोपवासेनब्रम्हलोकेमहीयते ५३ चतुरोवार्षिकान्मासान्नखरोमाणिधारये
त् कल्पस्थायीभवेद्राजन्सनरोनात्रसंशयः ५४ नमोनारायणायेतिजापेत्वानंतकंफलम् विष्णुपादांबुजस्पर्शात्कृतकृत्योभवेन्नरः
५५ लक्षप्रदक्षिणांयस्तुकरोतिहरिमव्ययम् हंसयुक्तविमानेनसयातिवैष्णवींपुरीम् ५६ त्रिरात्रभोजनत्यागान्मोदतेदिविदेव
त् परान्नवर्जनाद्राजन्देवोवैमानुषोभवेत् ५७ प्राजापत्यंचरेद्यस्तुचातुर्मास्येव्रतंनरः मुच्यतेपातकैःसर्वैस्त्रिविधैर्नात्रसंशयः
५८ तप्तकृच्छ्रातिकृच्छ्राभ्यांयःक्षिपेच्छयनंहरेः सयातिपरमंस्थानंपुनरावृत्तिवर्जितम् ५९ चांद्रायणेनयोराजन्क्षिपेन्मास
चतुष्टयम् दिव्यदेहोभवेत्सोथशिवलोकंचगच्छति ६० चातुर्मास्येनरोयावेत्त्यजेदन्नादिभक्षणं सगच्छेद्धरिसायुज्यंनभूय
स्तुभजायते ६१ भिक्षाभोजीनरोयोहिसभवेद्वेदपारगः पयोव्रतेनयोराजन्क्षिपेन्मासचतुष्टयम् ६२ तत्सवंशसमुच्छेदः कदा
चिन्नोपपद्यते पंचगव्याशनःपार्थचांद्रायणफलंलभेत् ६३ दिनत्रयंजलत्यागान्नरोगैरभिभूयते एवमादिव्रतैःपार्थतुष्टि
मायातिकेशवः ६४ सूतउवाच शृणुध्वंऋषयःसर्वेश्रावणेव्रतमुत्तमम् सर्वदुःखोपशमनंसर्वसंपत्प्रदायकम् ६५ यमस्य
दंडनंयस्माद्दूरीकृतमनुत्तमम् सुवासिनीनांसौभाग्यपुत्रपौत्रप्रवर्धनम् ६६ ऋषयऊचुः कस्मिन्मासिकथंकृत्वाकिंफलं
कस्यपूजनम् कोविधिःकेचनियमास्तत्सर्वंकथयस्वनः ६७ सूतउवाच श्रावणेशुक्लपक्षस्यप्रतिपद्याविशेषतः

तदारभ्यचदर्शांतमाचरेद्व्रतमुत्तमम् ६८ युधिष्ठिरउवाच यत्कृत्वामुच्यतेजंतुर्महापातकपंचकात् तत्सर्वंब्रूहिगोविंदयदितुष्टोसि
केशव ६९ श्रीकृष्णउवाच श्रावणस्यविधिंवक्ष्येसम्यक्छृणुयुधिष्ठिर यत्कृत्वासादरंभूयोननरोजायतेभुवि ७० पुण्यमासे
सितपक्षेप्रतिपद्यारभव्द्रतम् एतेष्वन्यतमंपक्षंसमारभ्यव्रतंचरेत् ७१ नभोमासेप्रियंदेवमर्कंगणपतिंशिवाम् उमापतिंचसहि
तंमाधवंपूजयेन्नरः ७२ पंचामृतैर्गंधपुष्पैर्नैवेद्यैर्धूपदीपकैः नपुष्पैःपूजयेद्यस्तुमाधवंचशिवापतिम् ७३ कुलनाशोभवेत्तस्य
पुण्यंतस्यविनश्यति श्रावणेपूजयेद्देवंबिल्वपत्रैःश्चपुष्पकैः ७४ कुलकोटिसमायुक्तोमोदतेविष्णुमंदिरे मौल्यादानीयपुष्पा
णिस्त्रीशूद्रादोर्द्विजोत्तम ७५ ब्राम्हणैःकारयेत्पूजांमासमेकंनिरंतरम् माधवंतुलसीपत्रैःकर्कटस्थेदिवाकरे ७६ सकृदभ्यर्च्यदेवे
शंनपुनर्जायतेभुवि यःकुर्यात्तुलसीहीनांश्रावणेसिंहगेरवौ ७७ कुलानांचशतस्वस्यनरकेपातयत्यसौ योर्चयेद्बिल्वपत्रै
र्णाशिवंगणपतिंशिवां ७८ कुलकोटिसमायुक्तोशिवलोकेमहीयते पितृन्गुरूनसमुद्दिश्यतुलसीविष्णवेर्पिता ७९ ब्रम्हहत्या
कोटिशतमगम्यानासहस्रकम् यःपूजयातिदेवेशंकमलैःकमलेक्षणम् ८० तस्यपुण्यफलंवक्तुंकःशक्तोदिविवाभुवि श्रावणे
मासियोदद्याज्जातीपुष्पमुमापतिं ८१ जन्मकोटिसहस्रेपुनर्दरिद्रोभवेन्नरः वैधव्यंनैवप्राप्नोतिनारीजन्मशतेष्वपि ८२
नारीवापुरुषोवापिनभःपुष्पंसुगंधिच दत्वाचैकंमहाविष्णोर्ब्रम्हहत्यांव्यपोहति ८३ दशांगंगुग्गुलंधूपंसमर्पयतिविष्ण
वे नतस्यसंततेर्हानिर्नपापीजायतेकुले ८४ घंटानादंतुयःकुर्यात्पूजाकालेमहात्मनः स्तूयमानोमुनिगणैर्विष्णुलोकम

हीयते ८५ घंटानादविहीनंतुयः कुर्याद्देवतार्चनम् सभुक्त्वानरकान्घोरान्स मूकोबधिरोभवेत् ८६ दीपदानंतुयःकुर्याद्देवायपरमात्म
ने अज्ञानांधतमोभित्वासाक्षात्पश्यतितंहरिं ८७ दीपायतैलंवार्तिवापात्रंवायोददातिच स्त्रीनरावापुनः कर्मलेशमात्रंनविद्यते ८८ तै
लंपात्रंतथावार्तिनददातिस्वशक्तितः अभावेसर्वथाकुर्यात्परदीपप्रबोधनम् ८९ भूत्वापश्चाद्विजकुलेजन्मसोपिमहायशाः कर्पू
रस्यार्तिकंभक्त्याविष्णोर्वस्तुनिवेदयेत् ९० ब्रम्हलोकंसमासाद्यभुक्त्वाभोगान्मनोरथान् नभोमासिशिवंविष्णुंकुर्याद्यादिप्रदक्षिणम्
९१ पदेपदेश्वमेधस्यफलंप्राप्नोतिनित्यशः एवंसंपूज्यदेवेशंकथांश्रुत्वाहरेरिमाम् ९२ एवंस्नात्वामासमेकमर्चयेन्माधवंशिवम् इमाः
कथाः स्तयाश्रुत्वानगर्भेवसतिध्रुवम् ९३ युधिष्ठिरउवाच तववाग्मृतपीतात्तृप्तिर्नासीन्ममात्मनः विनाजडमतिर्लोकश्रवणात्कोनुतृ
प्यति ९४ भूयः श्रावणमाहात्म्यंतातविस्तरतोवद श्रीभगवानुवाच शृणुराजेंद्रवक्ष्यामिनभोमाहात्म्यमुत्तमम् ९५ यद्ज्ञात्वाजायं
तेशुद्धिर्महतोमहदंहसः श्रावणेतुसुखंतिष्ठन्यः स्नायादुष्णवारिणा ९६ वह्निराशौमहाघोरेपतत्याशुनसंशयः श्रावणेमाधवं
देवपयसास्नापयेद्यदि ९७ स्नापयेत्पंचगव्येनसकोटिकुलमुद्धरेत् रुद्रसूक्तेनदेवेशंस्नापयेन्माधवंशिवम् ९८ कल्पकोटिस
हस्राणिमोदतेशिवमंदिरे श्रावणेमासिराजेंद्रयः कुर्यान्नक्तभोजनम् ९९ अश्वमेधफलंप्राप्यशिवलोकंचगच्छति यः कु
र्याच्छ्रावणेमासिमुनिपत्रेषुभोजनम् १०० ब्रम्हलोकंसमासाद्यमोदतेब्रम्हवर्चसा शिवंविष्णुंसमुद्दिश्यब्राम्हणान्भोजयेद्यदि १
श्रावणेशुक्लद्वादश्यांमुच्यतेचऋणत्रयात् श्रावणेमासिकर्तव्यंफलराशिविमोक्षणम् २ तस्यैवंसंततेर्हानिराकल्पंनैवजायते यो

द्दद्यात्श्रावणेमासिमातुलिंगंद्विजायते ३ तस्यपुत्रोभवेद्राजन्सर्वपापैःप्रमुच्यते श्रावणेतुव्यतीपातेब्राम्हणान्भोजयेद्यदि ४ पायसेनं
घृताक्तेनवंध्यापुत्रमवाप्नुयात् येचविष्णुकथासक्तायेचतद्गजनाशयाः ५ गायत्रीजपनिरतानतेयांतियमालयम् सहस्रनामप
ठनेनिरतास्तोत्रपाठकाः ६ गीतापाठेचनिरतास्तेनयांतियमालयम् गोदानस्यप्रदातारः शिवयात्रापरायणाः ७ गोपीचंदनलि
प्तांगानतेयांतियमालयम् येषांगृहेअग्निहोत्रंपुस्तकंभागवतस्यच ८ गीतायाःपुस्तकंवापिनतेयांतियमालयम् रुद्राक्षंचप्रवालंचहेममुक्ता
गलेस्थिताः ९ धारयन्तुस्वक्षपात्रंचनतेयांतियमालयम् श्रावणमासिकर्तव्यंसोमवारव्रतेशुभम् १० नक्तव्रतंप्रदोषंचकर्तव्यंविधि
पूर्वकम् इत्यादिष्टाःभगवताकृष्णयः शंसितव्रताः ११ सदाविष्णुकथासक्तचेतसांभावितात्मनाम् कर्मलोपंपूरयंतिकुलाकुला-
ष्वेद्दर्निशम् १२ स्नात्वाविष्णुकथांश्रुत्वातथासंपूज्यमाधवम् सर्वबंधाद्विनिर्मुक्तोविष्णोःसायुज्यमाप्नुयात् १३ आदावंतेतथामध्ये
यथाशक्तियथाशुचि उद्यापनंविनाराजन्फलंनैवभवेत्क्वचित् १४ तस्मात्सर्वप्रयत्नेनउद्यापनविधिंचरेत् पंचाशद्वाद्दशंवापिब्राम्हणा
भोजयेत्ततः १५ एनच्छास्त्रप्रवक्तारंयथाविभवमर्चयेत् अपूजयित्वावक्तारंयःशृणोतिकथामिमाम् १६ इक्षुःयंत्रेचिरंस्थित्वा
भुविव्यालोद्विजायते नशृणोतिकथांयस्तुवाच्यमानामिमांद्विजः १७ अरण्येनिर्जलेदेशेभवतिब्रम्हराक्षसः धर्मशास्त्रप्रवक्तारंशांतंदा
तंजितेंद्रियम् १८ मिष्टान्नैर्भोजयेद्यस्तुसर्वपापैःप्रमुच्यते अनेनविधिनायस्तुचातुर्मास्यव्रतंचरेत् १९ तस्यपुण्यफलंवक्तुं
विष्णुर्ब्रम्हाशिवोयमः नेंद्रोनसूर्योवरुणामन्वाद्याःकिमुतापरे २० व्रतैरनेकैर्नियमैःपांडवःश्रेष्ठपावनः कल्पस्थायीविष्णुलो

केवसतेनात्रसंशयः २१ ततोविवाहयेद्देवंशंखचक्रगदाधरम् कार्तिके शु. क्लपक्षस्य त्वेकादश्यांपृथासुत २२ उत्तिष्ठोत्तिष्ठदेवेशयोगनि
द्रांविहायच लक्ष्मींविसृज्यलोकेत्वमलक्ष्मींनुदकेशव २३ शृणोतिध्यातियस्तौतिजुहोत्याख्यातियोनरः हरेर्भक्तिकरःपार्थसगच्छे
द्वैष्णवंपदम् २४ दुग्धाब्धिवीचिशयनेभगवाननंतोयस्मिन्दिनेस्वपितिचाथविबुध्यतेच तस्मिन्ननन्यमनसामुपवासभाजांपुंसांद
दातिचगतिंगरुडासनोसौ २५ इतिश्रीभ. पु. विष्णोःशयन्येकादशीचातुर्मास्यमाहात्म्येश्रावणकृत्यंसंपूर्णम् अथश्रावणकृष्णै
कादशीकथा युधिष्ठिरउवाच आषाढशुक्लपक्षेतुयदेवशयनव्रतम् तन्मयाश्रुतपूर्वंहिपुराणेबहुविस्तरम् १ श्रावणेकृष्णपक्षेतु
किन्नामैकादशीभवेत् एतत्कथयगोविंदवासुदेवनमोस्तुते २ श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रतपापप्रणाशनम् नारदाय
पुरासजनपृच्छतेचपितामहः ३ पप्रच्छकृपयातातततदहंतेवदामिच नारदउवाच भगवन्श्रोतुमिच्छामित्वत्तोहंकमलासन ४ श्रावण
स्यासितेपक्षेकिंनामैकादशीभवेत् कोदेवःकोविधिस्तस्याःकिंपुण्यंकथयप्रभो ५ ब्रह्मोवाच शृणुनारदतेवच्मिलोकानांहित
काम्यया श्रावणेकादशीकृष्णाकामिकेतिचनामतः ६ तस्याः श्रवणमात्रेणवाजपेयफलंलभेत् तस्यांयःपूजयेद्देवंशंखचक्र
गदाधरम् ७ श्रीधराख्यंहरिंविष्णुंमाधवंमधुसूदनम् यजतेध्यायतेयोवैतस्यपुण्यफलंशृणु ८ नगंगायांनकाश्यांवैनैमिषे
नचपुष्करे तत्फलंसमवाप्नोतियत्फलंविष्णुपूजनात् ९ केदारेचकुरुक्षेत्रेराहुग्रस्तेदिवाकरे नतत्फलमवाप्नोतियत्फलं-
विष्णुपूजनात् १० ससागरवनोपेतायोददातिवसुंधराम् गोदावर्यांगुरोसिंहेव्यतीपातेचगंडके ११ नतत्फलमवाप्नोति

ए॰ मा॰
३१

यत्फलंकृष्णपूजनात् कामिकाव्रतकारीचत्वुभौफलसमौस्मृतौ १२ प्रसूयमानांयोधेनुंदद्यात्सोपस्करांनरः तत्फलंसमवाप्नोति
कामिकाव्रतकारकः १३ श्रावणेश्रीधरंदेवंपूजयेद्योनरोत्तमः तेनैवपूजितादेवागंधर्वोरगपन्नगाः १४ तस्मात्सर्वप्रयत्नेनकामिकादिवसे
हरिः पूजनीयोयथाशक्त्यामनुष्यैःपापभीरुभिः १५ संसारार्णवमग्नायेपापपंकसमाकुलाः तेषामुद्धरणार्थायकामिकाव्रतमुत्तमम्
१६ नातः परतराकाचित्सर्वपापापहारिणी एवंनारद जानीहिस्वयमाहपुराहरिः १७ अध्यात्मविद्यानिरतैर्यत्फलंप्राप्यतेनरैः त
तोबहुतरंविद्धिकामिकाव्रतसेवनात् १८ रात्रौजागरणंकुर्यात्कामिकाव्रतकोन्नरः नपश्यतियमंरौद्रंनैवपश्यतिदुर्गतिं १९ नपश्य
तिकुयोनिंचकामिकाव्रतसेवनात् कामिकायाव्रतेनैवकैवल्यंयोगिनोगताः २० सर्वैः सर्वप्रयत्नेनकर्तव्यानियतात्मभिः तुलसीप्र
भवैः पत्रैर्योनरः पूजयेद्धरिम् २१ नवैसलिप्यतेपापैः पद्मपत्रमिवांभसा सुवर्णभारमेकंतुरजतंचचतुर्गुणम् २२ तत्फलंसम
वाप्नोतितुलसीदलपूजनात् २२ रत्नमौक्तिकवैडूर्यप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूजनाद्यथा २३ तुलसीमंजरी
भिस्तुपूजितोयेनकेशवः आजन्मकृतपापस्यतेनसंमार्जितालिपिः २४ यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनीरोगाणा
मभिवंदितानिरसनीसिक्तांतकत्रासिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपितान्यस्तातच्चरणेविमुक्तिफलदातस्यैतुल
स्यैनमः २५ दीपंप्रददातियोमर्त्योदिवारात्रौहरेर्दिने तस्यपुण्यस्यसंख्यानंचित्रगुप्तोपिवेत्तिन २६ कृष्णाग्रेदीपकोयस्यज्व
लेदेकादशीदिने पितरस्तस्यतृप्यंति अमृतेनदिविस्थिताः २७ घृतेनदीपंप्रज्वाल्यतिलतैलेनवापुनः प्रयातिसूर्यलोकेसौ

श्रा॰ कृ॰
११

३१

दीपकोटिशतैर्वृतः २८ अयंतवाग्रेकथितःकामिकामहिमामया अतोनरैःप्रकर्तव्यासर्वपातकहारिणी २९ ब्रम्हहत्याघहरिणीभ्रूणह
त्याविनाशिनी त्रिदिवस्थानदात्रीचमहापुण्यफलप्रदा ३० श्रुत्वामाहात्म्यमेतस्यानरःश्रद्धासमन्वितः विष्णुलोकमवाप्नोतिसर्वपापैः
प्रमुच्यते ३१ इतिश्रीब्रम्हवैवर्त० श्रावणकृ० कामिकानाम्नीमाहात्म्यंसंपूर्णम् अथश्रावणशुक्लैकादशीकथा युधिष्ठिरउवा
च श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत् कथयस्वप्रसादेनममाग्रेमधुसूदन १ श्रीकृष्णउवाच शृणुष्वावहितोराजन्
कथांपापहरांपराम् यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् २ द्वापरस्ययुगस्यादौपुरामाहिष्मतीपुरे राजामहिजिदाख्यातो
राज्यंपालयतिस्वयम् ३ पुत्रहीनस्यतस्यैवनतद्राज्यंसुखप्रदम् अपुत्रस्यसुखंनास्तिइहलोकेपरत्रच ४ यततोस्यसुतप्रा-
प्तोकालोबहुतरोगतः नप्राप्तश्चसुतोराज्ञासर्वसौख्यप्रदोनृणाम् ५ दृष्ट्वात्मानंनिर्वयसंराजाचिंतापरोभवत् सदोगतःप्रजा
मध्येइदंवचनमब्रवीत् ६ इहजन्मनिभोलोकानमयापातकंकृतम् ७ अन्यायोपार्जितंवित्तंक्षिप्तंकोशेमयानहि ब्रह्मस्वंदेवद्रवि
णंनगृहीतंमयाक्वचित् ८ न्यासापहारोनकृतःपरस्यबहुपापदः स्वतवत्पालितालोकाधर्मेणविजितामही ९ दुष्टेषुपातितोदं
डोबंधुपुत्रोपमेष्वपि शिष्टाःसुपूजितालोकाद्वेष्याश्चापिमहाजनाः १० इत्येवंव्रजतोमार्गेधर्मयुक्तेद्विजोत्तमाः कस्मान्मम
गृहेपुत्रोनजातस्तद्विचार्यताम् ११ इतिवाक्यंद्विजाःश्रुत्वासप्रजाःसपुरोहिताः मंत्रयित्वानृपहितंजग्मुस्तेगहनंवनम् १२ इतस्त
तश्चपश्यंतश्चाश्रमानृषिसेवितान् नृपतेर्हितमिच्छंतोददृशुर्मुनिसत्तमम् १३ तप्यमानंतपोघोरंचिरानंदंनिरामयम् निराहारं

जितात्मानंजितक्रोधंसनातनम् १४ लोमशंधर्मतत्वज्ञंसर्वशास्त्रविशारदम् दीर्घायुषंमहात्मानमनेकब्रम्हसंमितम् १५ कल्पेगतेयस्यए
कमेकंलोमविशीर्यते अतोलोमशनामानंत्रिकालज्ञंमहामुनिम् १६ तंदृष्ट्वाहर्षिताःसर्वेआजग्मुस्तस्यसन्निधौ यथान्यायंयथार्हंतेनमश्च
क्रुर्यथोदितम् १७ विनयावनताःसर्वेऊचुश्चैवपरस्परम् अस्मद्भाग्यवशादेवप्राप्तोयंमुनिसत्तमः १८ तांस्तथाप्रणतान्दृष्ट्वाप्युवाचमुनिसत्त
मः लोमशउवाच किमर्थमिहसंप्राप्ताःकथयध्वंस्वकारणम् १९ मद्दर्शनान्हादगिरःस्तुवंतइहमांकिंतु असंशयंकरिष्यामिभवतायद्धितं
भवेत् २० परोपकृतयेजन्ममादृशानांनसंशयः जनाऊचुः श्रूयतामभिधास्यामोवयमागमकारणम् २१ संशयच्छेदनार्थायतवसन्नि-
धिमागताः पद्मयोनेःपरतरस्त्वत्तःश्रेष्ठोनविद्यते २२ अतःकार्यवशात्प्राप्ताःसमीपंभवतोवयम् महीजिन्नामराजासौपुत्रहीनोस्ति
सांप्रतम् २३ वयंतस्यप्रजाब्रम्हन्पुत्रवत्तेनपालिताः तंपुत्ररहितंदृष्ट्वातस्यदुःखेनदुःखिताः २४ तपःकर्तुमिहायातामतिंकृत्वातुनै
ष्ठिकीम् तस्यभाग्यवशाद्दृष्टस्त्वमस्माभिर्द्विजोत्तम २५ महतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणाम् उपदेशंवदमुनेराज्ञःपुत्रोयथा
भवेत् २६ इतितेषांवचःश्रुत्वामुहूर्तंध्यानमास्थितः प्रत्युवाचमुनिर्ज्ञात्वातस्यजन्मपुरातनम् २७ लोमशउ० पूर्वजन्मनिवैश्योयंधनहीनो
नोनृशंसकृत् वाणिज्यकर्मणिरतोग्रामाद्ग्रामांतरंभ्रमन् २८ ज्येष्ठेमासिसितेपक्षेदशमीदिवसेतथा मध्यान्हेद्युमणौप्राप्तेग्रा
मसीम्निजलाशयम् २९ कूपिकांसजलांदृष्ट्वाजलेपानेमनोदधौ सद्यःसूतासवत्साचधेनुस्तत्रसमागता ३० तृषातुरानिदाघार्ता
तस्यांनीरंपपौतुसा पिबंतींवारयित्वातामसौतोयंस्वयंपपौ ३१ कर्मणस्तस्यपाकेनसपुत्ररहितोनृपः पूर्वजन्मकृतात्पुण्या-

त्प्राप्तंराज्यमकंटकम् ३२ जनाऊचुः पुण्यात्पापंक्षयंयातिपुराणेश्रूयतेमुने पुण्योपदेशंकथय येनपापक्षयोभवेत् ३३ यथाभवत्प्रसा
देनपुत्रोस्यप्रभवितातथा लोमशउ० श्रावणेशुक्लपक्षेतुपुत्रदानामविश्रुता एकादशीतिथिस्त्वास्तिकुरुध्वंतद्व्रतंजनाः ३४ यथाविधिय
थान्यायंयथोक्तंजागरान्वितम् तस्याःपुण्यंस्फुविमलंददतुनृपतेजनाः ३५ एवंकृतेसुनियतंराज्ञःपुत्रोभविष्यति श्रुत्वेतल्लोमश
वचस्संप्रणम्यद्विजोत्तमम् ३६ प्रजग्मुःस्वगृहान्सर्वेहर्षोत्फुल्लविलोचनाः श्रावणेतुसमासाद्यश्रुत्वालोमशभाषितम् ३७ राज्ञासह
व्रतंचक्रुःसर्वेश्रद्धासमन्विताः द्वादशीदिवसेपुण्यंददुर्नृपतयेजनाः ३८ दत्तेपुण्येयथाराज्ञीगर्भमाधत्तशोभनम् प्राप्तेप्रसवकालेसासु
षुवेपुत्रमूर्जितम् ३९ एवमेषानृपश्रेष्ठपुत्रदानामविश्रुता कर्तव्यासुखमिच्छद्भिरिहलोकेपरत्रच ४० श्रुत्वामाहात्म्यमेतस्याःसर्वपापैःप्रमु-
च्यते इहपुत्रसुखंप्राप्यपरत्रस्वर्गतिर्भवेत् ४१ इतिश्रीभ० श्रावणशु० पुत्रदानाममाहात्म्यंसंपूर्णम् अथभाद्रपदकृष्णैकादशीकथा यु
धिष्ठिरउ० भाद्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् एतदिच्छाम्यहंश्रोतुंकथयस्वजनार्दन १ श्रीकृष्णउ० शृणुष्वैकमनाराजन्कथयि
ष्यामिविस्तरात् अजेतिनामतःप्रोक्तासर्वपापप्रणाशनी २ पूजयित्वाहृषीकेशंव्रतंतस्याःकरोतियः पापानितस्यनश्यंतिव्रतस्यश्रवणा
दपि ३ नातःपरतराराजन्लोकद्वयहितावहा सत्यमुक्तंमयात्वेतन्नासत्यंभाषितंमम ४ हरिश्चंद्रइतिख्यातोबभूवनृपतिःपुरा चक्र
वर्तीसत्यसंधोसमस्तायाभुवःपतिः ५ तस्यापिकर्मणोयोगाद्राज्यभ्रष्टोबभूवसः विक्रीत्वावनितांपुत्रंसचकारात्मविक्रयम् ६ पुल्क
सस्यचदासत्वंगतोराजासपुण्यकृत् सत्यमालंब्यराजेंद्रमृतचैलापकारकः ७ भोगवान्नृपतिश्रेष्ठोनतस्याच्चलितस्तथा एवंमतस्यनृपतेर्बहु-

वोवत्सरागताः८ ततश्चिंतापरोराजाबभूवात्यंतदुःखितः किंकरोमिक्कगच्छामिनिष्कृतिर्मेकथंभवेत् ९ इतिचिंतयतस्तस्यमग्नस्यदुःखजिरा
र्णवे आजगाममुनिःकश्चिज्ज्ञात्वाराजानमातुरम् १० परोपकरणार्थायनिर्मितोब्रम्हणाद्विजः सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः ११ कृ
तांजलिपुटोभूत्वागोतमस्याग्रतःस्थितः कथयामासवृत्तांतमात्मनोदुःखसंयुतम् १२ श्रुत्वानृपतिवाक्यानिगोतमोविस्मयान्वितः उ
पदेशंनृपतयेव्रतस्यास्यमुनिर्ददौ १३ मासिभाद्रपदेराजन्कृष्णापक्षेतुशोभना एकादशीसमायाताअजानाम्न्यतिपुण्यदा १४ तस्यांकुरु
व्रतंराजन्पापनाशोभविष्यति तवभाग्यवशादेषासप्तमेन्हिसमागता १५ उपवासपरोभूत्वारात्रौजागरणंकुरु एवंतस्याव्रतेचीर्णेस
र्वपापक्षयोभवेत् १६ तवपुण्यप्रभावेनचागतोहंनृपोत्तम इत्येवंकथयित्वातुमुनिरंतरधीयत १७ मुनिवाक्यंनृपःश्रुत्वाचकारव्रतमुत्त
मम् कृतेतस्मिन्व्रतेराज्ञःपापस्यांतोभवत्क्षणात् १८ श्रूयतांराजशार्दूलप्रभावोस्यव्रतस्यच यद्दुःखंबहुभिर्वर्षैर्भोक्तव्यंतत्क्षयोभवेत् १९
निस्तीर्णदुःखोराजासीद्व्रतस्यास्यप्रभावतः पत्न्यासहसमायोगपुत्रजीवनमापसः २० देवदुंदुभयोनेदुःपुष्पवर्षमभूद्दिवः एकादश्याःप्रभा
वेनप्राप्तंराज्यमकंटकम् २१ स्वर्गलेभेहरिश्चंद्रःसपुरःसपरिच्छदः ईदृग्विधंव्रतंराजन्येकुर्वंतिद्विजोत्तमाः २२ सर्वपापविनिर्मुक्तास्त्रिदि
वंयांतितेध्रुवम् पठणाच्छ्रवणाद्राजन्अश्वमेधफलंलभेत् २३ इतिश्रीब्रम्हा० भाद्रपदकृ० अजानाम्न्येकादशीमाहात्म्यंसंपूर्णम् अ
थभाद्रपदशुक्लैकादशीकथा युधिष्ठिरउवाच नभस्यसितपक्षेतुकिंनामैकादशीभवेत् कोदेवःकोविधिस्तस्याःकिंपुण्यंचवदस्वनः १
श्रीकृष्णउवाच कथयामिमहापुण्यांस्वर्गमोक्षप्रदायिनीम् वामनैकादशींराजन्सर्वपापहरांपराम् २ इमामेवजयंत्याख्यांप्राहुरे

कादशींनृप यस्याः श्रवणमात्रेणसर्वपापक्षयोभवेत् ३ वाजपेयफलंप्रोक्तंनातःपरतरंनृणाम् पापिनांपापनाशायजयंतीव्रतमुत्तमम् ४ ना
तःपरतरंराजन्नैवमोक्षप्रदायिनी एतस्मात्कारणाद्राजन्कर्तव्यागतिमिच्छताम् ५ वैष्णवैर्ममभक्तैश्चमनुजैर्मत्परायणैः नभस्येवाम
नोयैस्तुपूजितस्तैर्जगत्त्रयम् ६ पूजितंनात्रसंदेहस्तेयांतिहरिसन्निधिम् वामनः पूजितोयेनकमलैःकमललक्षणः ७ नभस्यसितपक्षेतुज
यंत्येकादशीदिने नर्नार्चितंजगत्सर्वंत्रयोदेवाःसनातनाः ८ एतस्मात्कारणाद्राजन्कर्तव्योहरिवासरः अस्मिन्कृतेनकर्तव्यंकिंचिदस्तिज
गत्त्रये ९ अस्यांप्रसुप्तोभगवानेत्यंगपरिवर्तनम् तस्मादेतांजनाःसर्वेवदंतिपरिवर्तिनाम् १० युधिष्ठिरउ० संशयोस्तिमहान्मह्यंश्रूयतांचजनार्दन
कथंसुप्तोसिदेवेशकथंयास्यंगवर्तनम् ११ किमर्थंदेवदेवेशबलिर्बद्धस्त्वयासुरः संतुष्टाःपृथिवीदेवाःकिमुकुर्वन्जनार्दन १२ कोविधिःकिंव्रतंचैव
चातुर्मास्यमुपास्यतां त्वयिस्वपितेजगन्नाथकिंकुर्वंतिजनाःप्रभो १३ एतद्विस्तरतोब्रूहिसंशयंहरमेप्रभो श्रीकृष्णउ० श्रूयतांराजशार्दूलकथां
पापहरांपरां १४ बलिर्वैदानवःपूर्वमासीन्त्रेतायुगेनृप अपूजयंश्चमांनित्यंमद्भक्तोमत्परायणः १५ जपैस्तुविविधैःसूक्तैर्यजतेमांसनित्यशः द्विजानां
पूजकोनित्यंयज्ञकर्मकृताशयः १६ परंत्विंद्रकृतंद्वेषीदेवलोकमजीजयत् मद्दत्तमिहलोकंवैजितंतेनमहात्मना १७ विलोक्यचततःसर्वेदेवाः
संहत्यमंत्रयन् सर्वैर्मिलित्वागंतव्यंदेवंविज्ञापितुंप्रभुं १८ ततश्चदेवऋषिभिःसार्कमिंद्रोगतःप्रभुम् शिरसात्ववनींगत्वास्तुतइंद्रेणसूक्ति
भिः १९ गुरुणादेवतैःसार्द्धंबहुधापूजितोप्यहम् ततोवामनरूपेणाप्यवतीर्णश्चपंचमे २० अत्युग्ररूपेणतदासर्वब्रह्मांडरूपिणा बाल
केनजितःसोवैसत्यमालंब्यतस्थिवान् २१ युधिष्ठिरउ० त्वयावामनरूपेणसोसुरश्चजितःकथम् एतत्कथयदेवेशमह्यंभक्तायविस्तरात्

२२ श्रीकृष्णउ॰ मयालोकेनसबलिः प्रार्थितोबहुरूपिणा पदत्रयमितांभूमिंदेहिमेभुवनत्रयम् २३ दत्तंभवतितेराजन्मात्रकार्याविचारणा इत्युक्त
श्चमयाराजादत्तवांस्त्रिपदांभुवम् २४ संकल्पमात्राद्ववृधेदेहस्त्रैविक्रमःपरम् भूर्लोकेतुकृतौपादौभुवर्लोकेतुजानुनी २५ स्वर्लोकेतुकटिन्य
स्यमहर्लोकेतथोदरम् जनलोकेतुहृदयंतपोलोकेचकंठकं २६ सत्यलोकेमुखंस्थाप्यउत्तमांगंतथोर्ध्वतः चंद्रसूर्यग्रहाश्चैवभगणोयोगस
युतः २७ सेंद्राश्चैवतदादेवानागाःशेषादयःपरे स्तुवंतोवेदसंभूतैः सूक्तैश्चविविधैस्तुमाम् २८ करेगृहीत्वातुबलिमब्रुवंवचनंतदा एकेनपूरि
तापृथ्वीद्वितीयेनत्रिविष्टपं २९ तृतीयस्यतुपादस्यस्थानंदेहिममानघ एवमुक्तेमयासोपिमस्तकंदत्तवान्बलिः ३० ततोवैमस्तकेत्वेकंपद
न्यस्तंमयातदा क्षिप्तोरसातलेराजन्दानवोममपूजकः ३१ विनयावनतंदृष्ट्वाप्रसन्नोस्मिजनार्दनः बलेवसाम्यहंनित्यंसन्निधौतवमानद ३२ इत्यु
वाचमहाभागंबलिंवैरोचनिंतदा नभस्यशुक्लपक्षेतुपरिवर्तिनिवासरे ३३ ममैकातत्रमूर्तिश्चबलिमाश्रित्यतिष्ठति द्वितीयाशेषपृष्ठेवैक्षीराब्धौ
सागरोत्तमे ३४ सुप्ततेचहृषीकेशोयावच्चायातिकार्तिकी तावद्भवतितत्पुण्यंसर्वपुण्योत्तमोत्तमं ३५ एतस्मात्कारणाद्राजन्कर्तव्यैषाप्रयत्न
तः एकादशीमहापुण्यापवित्रापापहारिणी ३६ अस्यांप्रसुप्तोभगवानत्यंगपरिवर्तनं एतस्यांपूजयेद्देवंत्रैलोक्यस्यपितामहम् ३७ दधिदा
नंप्रकर्तव्यंरौप्यतंडुलसंयुतं रात्रौजागरणंकृत्वामुक्तोभवतिमानवः ३८ एवंयःकुरुतेराजन्नेकादश्यांव्रतंशुभं सर्वपापहरंचैवभुक्तिमु
क्तिप्रदायकम् ३९ सदेवलोकंसंप्राप्यभ्राजतेचंद्रमायथा शृणुयाच्चैवयोमर्त्यःकथांपापहरांपराम् ४० अश्वमेधसहस्रस्यफलमाप्नो
तिमानवः ४१ इतिश्रीस्कंदपु॰ भाद्रपदशु॰ परिवर्तिनीनामैकादशीमाहात्म्यंसंपूर्णम् अथआश्विनकृष्णैकादशीकथा युधिष्ठिरउ॰

३४

कथयस्वप्रसादेनममाग्रेमधुसूदन आश्विनेकृष्णपक्षेतुकिन्नामैकादशीभवेत् १ श्रीकृष्णउ० आश्विनस्यासितेपक्षेइंदिरानामनामतः तस्याव्र
तप्रभावेनमहापापप्रणश्यति २ अधोयोनिगतानांचपितृणांगतिदायिनी शृणुष्वावहितोराजन्कथांपापहरांपराम् ३ तस्याःश्रवणमात्रेणवाज
पेयफलंलभेत् पुराकृतयुगेराजाबभूवरिपुसूदनः ४ इंद्रसेनइतिख्यातःपुरींमाहिष्मतींप्रति सराज्यंपालयामासधर्मेणयशसान्वितः ५
पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः माहिष्मत्यधिपोराजाविष्णुभक्तिपरायणः ६ जपन्गोविंदनामानिमुक्तिदानिनराधिपः कालंनयति
विधिवद्ध्यात्मस्यविचिंतकः ७ एकस्मिन्दिवसेराज्ञिसुखासीनेसदोगते अवतीर्यागमद्धीमानंबरान्नारदोमुनिः ८ तमागतमभिप्रेक्ष्यप्रत्युत्था
यकृतांजलिः पूजयित्वार्घ्यविधिनाचासनेसन्यवेशयत् ९ सुखोपविष्टःसमुनिःप्रत्युवाचनृपोत्तमं कुशलंतवराजेंद्रसप्तस्वंगेषुवर्तते १० धर्मे
मतिर्वर्तततेविष्णुभक्तिरतस्तथा इतिवाक्यंतुदेवर्षेःश्रुत्वाराजातमब्रवीत् ११ राजोवाच त्वत्प्रसादान्मुनिश्रेष्ठसर्वत्रकुशलंमम अद्य
क्रतुक्रियाःसर्वाःसफलास्तवदर्शनात् १२ प्रसादंकुरुविप्रर्षेब्रूह्यागमनकारणम् इतिराजावचःश्रुत्वादेवर्षिर्वाक्यमब्रवीत् १३ नारदउ० शृणुष्व
तांराजशार्दूलमद्वचोविस्मयप्रदं ब्रह्मलोकादहंप्राप्तोयमलोकंनृपोत्तम १४ शमनेनार्चितोभक्त्याउपविष्टोवरासने धर्मशीलःसत्यवान्सु
भास्करिंसमुपासते १५ बहुपुण्यप्रकर्तान्चव्रतवैकल्यदोषतः सभायांश्राद्धदेवस्यमयादृष्टःपितातव १६ कथितस्तेनसंदेशस्तंनि
बोधजनेश्वर इंद्रसेनइतिख्यातोराजामाहिष्मतीप्रभुः १७ तस्याग्रेकथयब्रह्मस्थितंमांयमसन्निधौ केनापिचांतरायेणपूर्वजन्मोद्भ
वेनवै १८ स्वर्गंप्रेषयमांपुत्रइंदिराव्रतदानतः इत्युक्तोहंसमायातःसमीपंतवपार्थिव १९ पितुःस्वर्गतयेराजन्निंदिराव्रतमाचर

तेनव्रतप्रभावेनस्वर्गंयास्यतितेपिता २० राजोवाच कथयस्वप्रभावेन भगवन्निंदिराव्रतम् विधिनाकेनकर्तव्यंकस्मिन्पक्षेतिथौतथा २१ ना
रदउ० शृणुराजन्हितंवच्मिव्रतस्यास्यविधिंशुभं आश्विनस्यासितेपक्षेदशमीदिवसेशुभे २२ प्रातःस्नानंप्रकुर्वीतश्रद्धायुक्तेनचेतसा त
तोमध्यान्हसमयेस्नानंकृत्वाबहिर्जले २३ पितॄणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः एकभुक्तिंततःकृत्वारात्रौभूमौशयीतच २४ प्रभा
तेविमलेजातेप्राप्तेचैकादशीदिने मुखप्रक्षालनंकुर्याद्दंतधावनपूर्वकम् २५ उपवासस्यनियमंगृण्हीयाद्भक्तिभावतः अद्यस्थित्वानिरा
हारःसर्वभोगविवर्जितः २६ श्वोभोक्ष्येपुंडरीकाक्षशरणंमेभवाच्युत इत्येवंनियमंकृत्वामध्यान्हसमयेतथा २७ शालग्रामशिलाग्रेतुश्राद्धंकृ
त्वायथाविधि भोजयित्वाद्विजान् श्रद्धान्दक्षिणाभिःसुपूजितान् २८ पितृशेषंसमाघ्रायगवेदद्याद्विचक्षणः पूजयित्वाहृषीकेशंधूपगंधादिभि
स्तथा २९ रात्रौजागरणंकुर्यात्केशवस्यसमीपतः ततःप्रभातसमयेसंप्राप्तेद्वादशीदिने ३० अर्चयित्वाहरिंभक्त्याभोजयित्वाद्विजानथ बंधुदौहित्रपुत्राद्यैः
स्वयंभुंजीतवाग्यतः ३१ अनेनविधिनाराजन्कुरुव्रतमतंद्रितः विष्णुलोकंप्रयास्यंतिपितरस्तवभूपते ३२ इत्युक्त्वानृपतिंराजन्मुनिरंतरधीयत य
थोक्तविधिनाराजाचकारव्रतमुत्तमम् ३३ अंतःपुरेणसहितःपुत्रभृत्यसमन्वितः कृतेव्रतेतुकौंतेयपुष्पवृष्टिरभूद्दिवः ३४ तत्पिताग्गरुडारू
ढोजगामहरिमंदिरं इंद्रसेनोपिराजर्षिःकृत्वाराज्यमकंटकम् ३५ राज्येनिवेश्यतनयंजगामत्रिदिवंशिवम् इंदिराव्रतमाहात्म्यंतवाग्रेकथि
तंमया ३६ पठनाच्छ्रवणाच्चास्यसर्वपापैःप्रमुच्यते भुक्त्वेहनिखिलान्भोगान्विष्णुलोकेवसेच्चिरं ३७ इतिश्रीब्रम्हवैवर्तपु० आश्विनकृ
ष्णैकादशीइंदिरामाहात्म्यंसंपूर्णं अथआश्विनशुक्लैकादशीकथा युधिष्ठिरउ० कथयस्वप्रसादेनभगवन्मधुसूदन इषस्यशुक्ल

पद्मातुकिन्नामैकादशीभवेत्१ श्रीकृष्णउ० शृणुराजेंद्रवक्ष्यामिमाहात्म्यंपापनाशनम् शुक्लपक्षेचाश्वयुजिभवेदेकादशीतुया२ पाशांकुशेतिविख्या
तासर्वपापहरापरा पद्मनाभाभिदानंतुपूजयेत्तत्रमानवः३ सर्वाभीष्टफलप्राप्त्यैसर्वमोक्षप्रदंनृणाम् तपस्तप्त्वानरस्तीव्रंचिरंसुनियतेंद्रियः
४ तत्फलंसमवाप्नोतितंनत्वागरुडध्वजम् कृत्वापिबहुशःपापंनरोमोहसमन्वितः५ नयातिनरकंघोरंनत्वापापहरंहरिम् पृथिव्यांयानितीर्
र्थानिपुण्यान्यायतनानिच६ तानिसर्वाणिप्राप्नोतिविष्णोर्नामानुकीर्तनात् देवंशार्ङ्गधरंविष्णुंयेप्रपन्नाजनार्दनम्७ नतेषांयमलोकेश्वनृणां
वैजायतेकचित् उपोष्यैकादशीमेकांप्रसंगेनापिमानवाः८ नयातियातनांयामींपापकृत्वातिदारुणम् वैष्णवःपुरुषोभूत्वाशिवनिंदांकरोति
यः९ योनिंदेद्वैष्णवंलोकंसयातिनरकंध्रुवम् अश्वमेधसहस्राणिराजसूयशतानिच१० एकादश्युपवासस्यकलांनार्हंतिषोडशीम् एकादशीस
मंपुण्यंकिंचिल्लोकेनविद्यते११ नेदृशंपावनंकिंचित्त्रिषुलोकेषुविद्यते यादृशंपद्मनाभस्यदिनंपातकहानिदम्१२ तावत्पापानितिष्ठंतिदेहेस्मिन्मनु
जाधिप यावन्नोपोष्यतेजंतुःपद्मनाभदिनंशुभम्१३ व्याजेनापिकृताराजन्नदर्शयतिभास्करिम् स्वर्गमोक्षप्रदात्येषाशरीरारोग्यदायिनी
१४ सुकलत्रप्रदात्येषाधनपुत्रप्रदायिनी नगंगानगयाराजन्नकाशीनचपुष्करम्१५ नचापिकौरवंक्षेत्रंपुण्यंभूपहरेर्दिनात् रात्रौजागरणंकृत्वास
मुपोष्यहरेर्दिनम्१६ अनायासेनभूपालप्राप्यतेवैष्णवंपदम् दशवैमातृकेपक्षेदशराजेंद्रपैतृके१७ प्रियायादशपक्षेतुपुरुषानुद्धरेन्नरः चतुर्भु
जादिव्यरूपानागारिकृतकेतनाः१८ स्रग्विणःपीतवस्त्राश्चप्रयांतिहरिमंदिरम् बालत्वेयौवनत्वेचवृद्धत्वेचनृपोत्तम१९ उपोष्यद्वादशीनूनंने
तिपापोपिदुर्गतिम् पाशांकुशामुपोष्यैवआश्विनस्यासितेतरे२० सर्वपापविनिर्मुक्तोहरिलोकंसगच्छति दत्वाहेमतिलान्भूमिंगामन्नमुद

कंतथा २१ उपानद्दुस्त्रछत्रादिनपद्यतियमंनरः यस्यपुण्यविहीनानिदिनान्यपगतानिवै २२ सलोहकारभस्त्रेवश्वसन्नपिमृतोहिवै नवंध्यंदिवसं
कुर्याद्दरिद्रोपिनृपोत्तम २३ समाचरन्यथाशक्तिस्नानदानादिकाःक्रियाः तडागारामसौधानांसत्राणांपुण्यकर्मणाम् २४ कर्तारोनैवपश्य
न्तिधिसत्तायमयातनाम् दीर्घायुषोधनाढ्याश्चकुलीनारोगवर्जिताः २५ दृश्यंतेमानवालोकेपुण्यकर्तारईदृशाः किमत्रबहुनोक्तेनयांत्यधर्मे
णदुर्गतिम् २६ आरोहंतिदिवंधर्मैर्नात्रकार्याविचारणा इतितेकथितंराजन्यत्पृष्टोहंत्वयानघ २७ पाशांकुशायामाहात्म्यंकिमन्यच्छ्रोतुमि
च्छसि २८ इतिश्रीब्रह्मवैवर्तपुराणेआश्वि॰कादशीपाशांकुशानाम्नीमाहात्म्यंसंपूर्णं अथकार्तिककृष्णैकादशीकथा युधिष्ठि
रउवाच कथयस्वप्रसादेनममस्नेहाज्जनार्दन कार्तिकस्यासितेपक्षेकिन्नामैकादशीभवेत् १ श्रीकृष्णउवाच श्रूयतांराजशार्दूलक
थयामितवाग्रतः कार्तिकेकृष्णपक्षेतुरमानाम्नीसुशोभना २ एकादशीसमाख्यातामहापापहरापरा अस्याःप्रसंगतोराजन्माहात्म्यंप्रवदामिते ३
मुचुकुंदइतिख्यातोबभूवनृपतिःपुरा देवेंद्रेणसमंयस्यमित्रत्वमभवन्नृपः ४ यमेनवरुणेनैवकुबेरेणसमंतथा बिभीषणेनएतस्यसखित्व
मभवत्सह ५ विष्णुभक्तःसत्यसंधोबभूवनृपतिःसदा तस्यैवंशासतोराजन्राज्यंनिहतकंटकम् ६ बभूवदुहितागेहेचंद्रभागासरि
द्वरा शोभनायचसादत्ताचंद्रसेनसुतायवै ७ सकदाचित्समायातःश्वशुरस्यगृहेनृप एकादशीव्रतमिदंसमायातस्सुपुण्यदम् ८
समायातेव्रतदिनेचंद्रभागात्वचिंतयत् किंभविष्यतिदेवेशममभर्तापिदुर्बलः ९ क्षुधांनसहतेसोढुंपिताचैवोग्रशासनः पटहस्ता
ड्यतेयस्यसंप्राप्तेदशमीदिने १० नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंहरेर्दिने श्रुत्वापटहनिर्घोषंशोभनस्त्वब्रवीत्प्रियां ११ किंकर्तव्यंम

प्राकांतेदेहि शिक्षांसुशोभने कृतेनयेनमेसम्यक्जीवितंनविनश्यति १२ चंद्रभागोवाच मत्पितुर्वेश्मनिविभोभोक्तव्यंनापिकेनचित् गजैर
श्वैस्तथाचोष्ट्रैरन्यैःपशुभिरेवच १३ तृणमन्नंतथावारिनभोक्तव्यंहरेर्दिने मानवैश्चकुतःकांतभुज्यतेहरिवासरे १४ यदित्वंभोक्ष्यसेकांततनतोगेहा
त्प्रयास्यतां एवंविचार्यमनसास्फुटंमानसंकुरु १५ शोभनउ० सत्यमेतत्त्वयेवोक्तंकरिष्येहमुपोषणं दैवेनविहितंयद्वैतत्तथैवभविष्यति १६ इतिदि
ष्टमतिंकृत्वा चकारव्रतमुत्तमं क्षुत्तृषापीडिततनुःसबभूवातिदुःखितः १७ इतिचिंतयतस्तस्यआदित्योस्तमगाद्गिरिं वैष्णवानांनराणांसानिशा
हर्षविवर्द्धिनी १८ हरिपूजारतानांचजागरासक्तचेतसां बभूवनृपशार्दूलशोभनस्यातिदुःसहा १९ रवेरुदयवेलायांशोभनःपंचतांगतः दाहया
मासराजातंराजयोग्यैश्चदारुभिः २० चंद्रभागानात्मदेहंददाहपितृवारिता कृत्वौर्ध्वदैहिकंतस्यतस्थौजनकवेश्मनि २१ शोभनेननृपश्रेष्ठ
रमाव्रतप्रभावतः प्राप्तंदेवपुरंरम्यंमंदराचलसानुनि २२ अनुत्तममनाधृष्यमसंख्येयगुणान्वितम् हेमस्तंभमयैःसौधैरत्नवैडूर्यमंडितैः २३
स्फाटिकैर्विविधाकारैर्विचित्रैरुपशोभितम् सिंहासनसमारूढःस्फश्वेतंछत्रचामरः किरीटकुंडलयुतोहारकेयूरभूषितः २४ स्तूयमानश्च
गंधर्वैरप्सरोगणसेवितः शोभनःशोभतेतत्रदेवराडपरोयथा २५ सोमशर्मेतिविख्यातोमुचुकुंदपुरेवसन् तीर्थयात्राप्रसंगेनभ्रमन्विप्रोददृश
तं २६ नृपजामातरंज्ञात्वातत्समीपंजगामसः आसनादुत्थितःशीघ्रंनमश्चक्रेद्विजोत्तमं २७ चकारकुशलंप्रश्नंश्वशुरस्यनृपस्यच कांता
याश्चंद्रभागायास्तथैवनगरस्यच २८ सोमशर्मोवाच कुशलंवर्ततेराजन्श्वशुरस्यगृहेतव चंद्रभागाकुशलिनीसर्वतःकुशलंपरे २९
स्ववृत्तंकथ्यतांराजन्आश्चर्यंपरमंमम पुरंविचित्रंसुचिरंनदृष्टंकेनचित्क्वचित् ३० एतदाचक्ष्वनृपतिःकुतःप्राप्तमिदंत्वया शोभनउवा०

ए०मा०
३७

कार्तिकस्यासितेपक्षेनाम्नाचैकादशीरमा ३१ तामुपोष्यमयाप्राप्तंद्विजेंद्रपुरमध्रुवं ध्रुवंभवतियेनैवतत्कुरुष्वद्विजोत्तम ३२ द्विजेंद्र उवाच क-
थमध्रुवमेतद्धिकथंहिभवतिध्रुवं तत्त्वंकथयराजेंद्रतत्करिष्यामिनान्यथा ३३ शोभनउ० मयैतत्कथितंविप्रश्रद्धाहीनंव्रतोत्तमं तेनाहमन्य-
ध्रुवंमन्येध्रुवंभवतितच्छृणु ३४ मुचुकुंदस्यदुहिताचंद्रभागासुशोभना तस्यैकथयवृत्तांतंध्रुवमेतद्भविष्यति ३५ तच्छ्रुत्वाथद्विजवरस्त-
स्यैसर्वंन्यवेदयत् श्रुत्वाथसाद्विजवचोविस्मयोत्फुल्ललोचना ३६ प्रत्यक्षमथवास्वप्नस्त्वयैतत्कथ्यतेद्विज सोमशर्मोवाच प्रत्यक्षंपु-
त्रितेकांतोमयादृष्टोमहावने ३७ देवतुल्यमनाधृष्यंदृष्टंतस्यपुरंमया अध्रुवंतेनतत्प्रोक्तंध्रुवंभवतितत्कुरु ३८ चंद्रभागोवाच त-
त्रमांनयविप्रर्षेपतिदर्शनलालसाम् आत्मनोव्रतपुण्येनकरिष्यामिपुरंध्रुवं ३९ आवयोर्द्विजसंयोगोयथाभवतितत्कुरु प्राप्यतेहिमह-
त्पुण्यंकृत्वायोगंवियुक्तयोः ४० इतिश्रुत्वासहतयासोमशर्माजगामह आश्रमंवामदेवस्यमंदराचलसन्निधौ ४१ वामदेवोशृणोत्सर्ववृत्तांतंकथि-
तंतयोः अभ्यषिंचच्चंद्रभागांवेदमंत्रैरथोज्ज्वलाम् ४२ ऋषिमंत्रप्रभावेनविष्णुवासरसेवनात् दिव्यदेहाबभूवासौदिव्यांगतिमवाप-
ह ४३ पत्युःसमीपमगमत्प्रहर्षोत्फुल्ललोचना सहर्षःशोभनोतीवदृष्ट्वाकांतांसमागतां ४४ स्वमाहूयस्वकेवामेपार्श्वेतांसन्यवेशयत् साचोवाचप्रि-
यंहर्षाच्चंद्रभागाशुभंवचः ४५ शृणुकांतहितंवाक्यंयत्पुण्यंविद्यतेमयि अष्टवर्षाधिकाजातायदाहंपितृवेश्मनि ४६ मयाततःप्रभृ-
तिचकृतमेकादशीव्रतं यथोक्तविधिसंयुक्तंश्रद्धयुक्तेनचेतसा ४७ तेनपुण्यप्रभावेनभविष्यतिपुरंध्रुवं सर्वकामसमृद्धंचयावदाभूत-
संप्लवं ४८ एवंसानृपशार्दूलरमतेपतिनासह दिव्यभोगादिव्यरूपादिव्याभरणभूषिता ४९ शोभनोपितयासार्धंरमतेदिव्यविग्रहः रमा-

का०कृ०
११
३७

व्रतप्रभावेनमंदराचलसानुनि ५० चिंतामणिसमाख्येयाकामधेनुसमाथवा रमाभिधानान्नृपतेतवाग्रेकथितामया ५१ ईदृशंचव्रतंराजन्येकुर्वंतिन-
रोत्तमाः ब्रम्हहत्यादिपापानिनाशंयांतिनसंशयः ५२ एकादशीव्रतानांचपक्षयोरुभयोरपि यथाशुक्लातथाकृष्णातिथिभेदंनकारयेत् ५३ सेवितैकादशी
नृणांभुक्तिमुक्तिप्रदायिनी धेनुः कृष्णातथाश्वेताउभयोःसदृशंपयः ५४ तथैवतुल्यफलदंस्मृतमेकादशीव्रतम् एकादशीव्रतानांचमाहात्म्यं
शृणुयान्नरः ५५ सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ५६ इतिश्रीब्रम्हवै० कार्तिककृष्णैकादशी० रमानाम्नीमाहात्म्यंसंपूर्णम् अथका
र्तिकशुक्लैकादशीकथा ब्रह्मोवाच प्रबोधिन्याश्चमाहात्म्यंपापघ्नंपुण्यवर्धनम् मुक्तिप्रदंसुबुद्धीनां शृणुष्वमुनिसत्तम १ तावद्गर्जंतिविप्रेंद्र
गंगाभागीरथीक्षितौ यावन्नायातिपापघ्नीकार्तिकेहरिबोधिनी २ तावद्गर्जंतितीर्थानिसमुद्रादिसरांसिच यावत्प्रबोधिनीविष्णोस्तिथिर्नायाति
कार्तिकी ३ अश्वमेधसहस्राणिराजसूयशतानिच एकेनैवोपवासेनप्रबोधिन्यालभेन्नरः ४ नारदउ० एकभुक्तेनकिंपुण्यंकिंपुण्यंनक्तभोजने
उपवासेनकिंपुण्यंतन्मेब्रूहिपितामह ५ ब्रम्होवाच एकभुक्तेनजन्मैकं नक्तेनद्विजनुर्भवं सप्तजन्मभवंपापमुपवासेननश्यति ६ यद्दुर्लभं
यदप्राप्यंत्रैलोक्येनतुगोचरं तदप्यप्रार्थितंपुत्रददातिहरिबोधिनी ७ मेरुमंदरमात्राणिपापान्युग्राणियानितु एकेनैवोपवासेनदहतेपा
पहारिणी ८ पूर्वजन्मसहस्रेषुयत्कृतंकर्मउपार्जितं जागरेणप्रबोधिन्यादहतेतूलराशिवत् ९ उपवासंप्रबोधिन्यायःकरोतिस्वभावतः विधिवन्मु
निशार्दूलयथोक्तंलभतेफलं १० यथोक्तंसुकृतंयस्तुविधिवत्कुरुतेनरः स्वल्पंमुनिवरश्रेष्ठमेरुतुल्यंभवेत्फलं ११ विधिहीनंतुयःकुर्यात्सुकृतंमेरु
सावकं अणुमात्रंनचाप्नोतिफलंधर्मस्यनारद १२ संध्याहीनेव्रतघ्ने नास्तिके हेतुकेशठे नवेपांतिष्ठतदेहेधर्मशास्त्र्यान्दूषके १३ परदाररते-

मूर्खेर्वकृतस्रेवं वंचकेनतथा धर्मोनतिष्ठतेदेहाग्नेषामतिदेह्निनां १४ ब्राम्हणोवापिशूद्रोवासेवतेपरयोषितं ब्राम्हणींचविशेषेणचांडालमहशावुभौ १५
सभर्तृकांवाविधवांब्राम्हणोब्राम्हणींयदि सेवतेमुनिशार्दूलसान्वयोयातिसंक्षयं १६ परदाराभिगमनंकुरुतेयोद्विजाधमः संततिर्नभवेत्तस्यफलं
जन्मार्जितंनहि १७ गुरुणासहविप्रैश्चयोहंकारेणवर्तते सुकृतंनश्यतेशीघ्रंधनंप्राप्नोतिसंततिं १८ आचारभ्रष्टदेहानांवृषलीगामिनांसु
त यस्तुतैःसेव्यमानोपिधर्मस्तेषांपराङ्मुखः १९ पापिनस्तेनराःलोकेसंगतिंपतितैःसह येकुर्वंतिनृपश्रेष्ठतेगच्छंतिमयालयम् २० धर्म
भ्रष्टोनृणांयेषांस्वागतासनभाजनः तेषांविनश्यतेस्वर्गकीर्तिरायुःप्रजासुखं २१ साधूनामपमानंतुयेकुर्वंतिनराधमाः त्रिवर्गफलहीनास्ते
दह्यंतेनरकाग्निना २२ कृत्वावमानंसाधूनांयेहृष्यंतिनराधमाः वारयंतिनयेमूढास्तेपश्यंतिकुलक्षयम् २३ आचारभ्रष्टदेहस्यहेतुकस्य
शठस्यच दद्रुतोजिह्मतावापिगतिस्तस्यनविद्यते २४ तस्मान्नत्वाचरेत्किंचिदशुभंलोकगर्हितम् सदाचारवताभाव्यंयथाधर्मोननश्यति २५
येध्यायंतिमनोवृत्त्याकेशिध्यामप्रबोधिनीं तेषांविलीयतेपापंपूर्वजन्मशतोद्भवं २६ समतीतंभविष्यंचवर्तमानंकुलायुतं विष्णुलोकंनयत्याशुप्रबो
धिन्यांतुजागरे २७ वसंतिपितरोहृष्टाविष्णुलोकेत्वलंकृताः विमुक्तानारकैर्दुःखैःपूर्वकर्मसमुद्भवैः २८ कृत्वातुपातकंघोरंब्रम्हहत्यादिकंनरः
कृत्वातुजागरंविष्णोर्धौतपापोभवेन्मुने २९ दुःप्राप्यंयत्फलंविप्रअश्वमेधादिभिर्मखैः प्राप्यतेतत्सुखेनैवप्रबोधिन्यांतुजागरे ३० आप्लुत्य
सर्वतीर्थेषुदत्वागाःकांचनंमहीम् नतत्फलमवाप्नोतियत्कृत्वाजागरंहरेः ३१ जातःसएवसुकृतीकुलंतेनैवपावितं कार्तिकेमुनिशार्दूलकृ
तायेनप्रबोधिनी ३२ यथाध्रुवंनृणांमृत्युर्धननाशस्तथाध्रुवं इतिज्ञात्वामुनिश्रेष्ठकर्तव्यंवैष्णवंदिनं ३३ यानिकानिचतीर्थानित्रैलोक्येसंभवंति

न्त तानितस्यगृहेसम्यक्कृ यः करोति प्रबोधिनीं ३४ सर्वकृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः उपोष्यैकादशीं रम्यां कार्तिके हरिबोधिनीं ३५ स
ज्ञानी सच योगी च स तपस्वी जितेंद्रियः भोगो मोक्षश्च तस्यास्ति य उपास्ते हरिबोधिनीं ३६ विष्णुप्रियतरा ह्येषा धर्मसारस्य दायिनी सकृदेना-
मुपोष्यैव मुक्तिभाक् च भवेन्नरः ३७ प्रबोधिनीमुपोषित्वा न गर्भे विशते नरः सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद ३८ कर्मणा मनसा
वाचा पापं यत्समुपार्जितं तत्क्षालयति गोविंदः प्रबोधिन्यां तु जागरे ३९ स्नानं दानं तपो होमः समुद्दिश्य जनार्दनं नरैर्यत्क्रियते वत्स प्रबोधि
न्यां तदक्षयं ४० येन येन तिनराः स्तस्या भक्त्या देवं च माधवं समुपोष्य प्रमुच्यंते पापैस्तैः शतजन्मनां ४१ महाव्रतमिदं पुत्र महापापौघनाशनं प्रबोध
वासरं विष्णोर्विधिवत्समुपोषयेत् ४२ व्रतेनानेन देवेशं परितोष्य जनार्दनं विराजयन् दिशः सर्वाः प्रयाति भवनं हरेः ४३ कर्तव्यैषा प्रयत्नेन
नरैः कांतिमभीप्सुभिः द्वादशीह्रिपदाश्रेष्ठ कार्तिके तु प्रबोधिनी ४४ बाल्ये यच्चार्जितं वत्स यौवने वार्धके तथा शतजन्मकृतं पापं स्वल्पं वाय-
दि वा बहु ४५ शुष्कमार्द्रमुनिश्रेष्ठ स्वर्गतुल्यमपि नारद तत्क्षालयति गोविंदो ह्यस्यामभ्यर्च्य भक्तितः ४६ धनधान्यवहा पुण्या सर्वपापह
रा परा तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्क्वचित् ४७ चंद्रसूर्योपरागे च यत्फलं परिकीर्तितम् तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां तु जाग
रे ४८ स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं हरेः तत्सर्वं कोटिगुणितं प्रबोधिन्यां तु यत्कृतं ४९ जन्मप्रभृति यत्पुण्यं नरेणाभ्यर्जितं भवेत्
वृथा भवति तत्सर्वं अकृत्वा कार्तिकं व्रतं ५० अकृत्वा नियमं विष्णोः कार्तिकं यः क्षिपेन्नरः जन्मार्जितस्य पुण्यस्य फलं नाप्नोति नारद ५१
तस्मात्त्वया प्रयत्नेन देवदेवो जनार्दनः उपासनीयो विप्रेंद्र सर्वकामफलप्रदः ५२ परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतत्परः परान्नव

ए.मा.
३९

र्जेनाहत्सचांद्रायणफलंलभेत् ५३ नित्यंशास्त्रविनोदेनकार्तिकंयःक्षिपेन्नरः निर्दहेत्सर्वपापानियज्ञायुतफलंलभेत् ५४ नतथातुष्यतेयज्ञैर्नदानैर्नगज
जादिभिः यथाशास्त्रकथालापैःकार्तिकेमधुसूदनः ५५ येकुर्वंतिकथांविष्णोर्येशृण्वंतिसमाहिताः श्लोकार्धंश्लोकमेकंवाकार्तिकेगोशतंफ
लं ५६ सर्वधर्मान्परित्यज्यकार्तिकेकेशवाग्रतः शास्त्रावधारणंकार्यंश्रोतव्यंचमहामुने ५७ श्रेयसांलोभबुद्ध्यावायःकरोतिहरेःकथां कार्ति
केमुनिशार्दूलकुलानांतारयेच्छतं ५८ नियमेननरोयस्तुशृणुतेवैष्णवींकथां कार्तिकेतुविशेषेणगोसहस्रफलंलभेत् ५९ प्रबोधवासरेविष्णोःकु
रुतेयोहरेःकथां सप्तद्वीपवतीदानेतत्फलंलभतेमुने ६० श्रुत्वाविष्णुकथांदिव्यांयेवर्यंतिकथाविदं स्वशक्त्यामुनिशार्दूलतेषांलोकाःसनातनाः ६१
ब्रह्मणोवचनंश्रुत्वानारदःपुनरब्रवीत् नारदउवाच विधानंब्रूहिमेस्वामिन्नेकादश्याःसुरोत्तम ६२ चीर्णनयेनभगवन् यादृशफलमाप्नुयात्
नारदस्यवचःश्रुत्वाब्रह्मावचनमब्रवीत् ६३ ब्राह्मेमुहूर्तेचोत्थायएकादश्यांद्विजोत्तम स्नानंचैवप्रकर्तव्यंदंतधावनपूर्वकम् ६४ न
द्यांतडागेकूपेवावाप्यांगेहेतथैवच केशवंचैवसंपूज्यःकथायाःश्रवणंतथा ६५ नियमार्थेमहाभागइमंमंत्रमुदीरयेत् एकादश्यांनिराहारः
स्थित्वाह्वनिपरेत्यहम् ६६ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः ६७ भक्तिभावेनतुष्टात्मा
त्वुपवासंसमर्पयेत् रात्रौजागरणंकुर्याद्देवदेवस्यसन्निधौ ६८ गीतंनृत्यंचवाद्यंचतथाकृष्णाकथामुने यःकरोतिसपुण्यात्मात्रैलोक्यो
परिसंस्थितः ६९ बहुपुण्यैर्बहुफलैः कर्पूरागरुकुंकुमैः हरेःपूजाविधातव्याकार्तिक्यांबोधवासरे ७० वित्तशाठ्यंनकर्तव्यंसंप्राप्तेहू-
रिवासरे यस्मात्पुण्यमसंख्यातंप्राप्यतेमुनिसत्तम ७१ फलैर्नानाविधैर्दिव्यैः प्रबोधिन्यांतुजागरे शंखेतोयंसमादायत्वर्घ्यो

द्योजनार्दनं ७२ यत्फलंसर्वतीर्थेषुसर्वदानेषुयत्फलं यत्फलंकोटिगुणितंदत्वार्घंबोधवासरे ७३ अगस्त्यकुसुमैर्देवंपूजयेद्योजनार्दनंदेवेंद्रापिमु
निश्रेष्ठकरोतिकरसंपुटं ७४ नतत्करोतिविप्रेंद्रतपसातोषितोहरिः यत्करोतिहृषीकेशोमुनिपुष्पैरलंकृतः ७५ बिल्वपत्रैश्चयेकृष्णंकार्तिकेकलिवर्ध
नपूजयंतिमहाभक्त्यामुनिस्तेषांमयोदिता ७६ तुलसीदलपुष्पैश्चपूजयंतिजनार्दनं कार्तिकेसकलंवत्सपापंजन्मायुतंदहेत् ७७ दृष्टास्पृष्टाथवाध्या
ताकीर्तितानमिस्तास्तुता रोपितासिंचितानित्यंपूजितातुलसीशुभा ७८ नवधातुलसीभक्तिंयेकुर्वंतिदिनेदिने युगकोटिसहस्राणितेवसंतिहरेर्गृ-
हे ७९ रोपितातुलसीयावत्कुरुतेमूलविस्तरं तावद्युगसहस्राणितनोतिसुकृतंमुने ८० यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने रोपितातुलसी
पुंभिर्वर्ततेवसुधातले ८१ कुलेतेषांतुयेजातायेभविष्यंतियेगताः आकल्पयुगसाहस्रंतेषांवासोहरेर्गृहे ८२ कदंबकुसुमैर्देवंयेर्चयंतिजनार्द
नं तेषांयमालयंनैवप्रसादाच्चक्रपाणिनः ८३ दृष्ट्वाकदंबकुसुमंप्रीतोभवतिकेशवः किंपुनःपूजितोविप्रसर्वकामप्रदोहरिः ८४ यः पुनः पाटला
पुष्पैर्वसंतेगरुडध्वजं अर्चयेत्परयाभक्त्यामुक्तिभागीभवेद्द्विजः ८५ बकुलाशोककुसुमैर्येर्चयंतिजगत्पतिं विशोकास्तेभविष्यंतियावच्चं-
द्रोदिवाकरः ८६ येर्चयंतिजगन्नाथंकरवीरैः सितासितैः चतुर्युगानिविप्रेंद्रप्रीतोभवतिकेशवः ८७ मंजरींसहकारस्यकेशवोपरियेनराः य
च्छंतितेमहाभागागोकोटिफलभागिनः ८८ दूर्वांकुरैर्हरेर्यस्तुपूजाकालेप्रयच्छति पूजाफलंशतगुणंसम्यगाप्नोतिमानवः ८९ शमीपत्रैस्तुयेदे
वंपूजयंतिसुखप्रदं यममार्गोमहाघोरोनिस्तीर्णस्तैस्तुनारद ९० वर्षाकालंतुदेवेशंकुसुमैश्चंपकोद्भवैः येर्चयंतिनतेमर्त्याः संसरेयुःपुनर्भवे-
९१ कुंभीपुष्पंतुविप्रर्षेयेयच्छंतिजनार्दनं सुवर्णपलमात्रंतेलभंतेवैफलंमुने ९२ सुवर्णकेतकीपुष्पंयोददातिजनार्दने कोटिजन्मार्जितं-

यांगंमेनिर्मलंकुरुतेनमः देवदेवजगंन्नाथशंखचक्रगदाधर १६ देहिविष्णोममानुज्ञांतवतीर्थावगाहने वारुणांश्चजपेन्मंत्रान् स्नानंकुर्याद्विधानतः
१७ गंगादितीर्थंसंस्मृत्य यत्रकुत्रजलाशये पश्चात्संमार्जयेद्गात्रं विधिनानृपसत्तम १८ मुखेपृष्ठेचहृदयेबाह्वोः शिरसिचाप्यधः परिधायस्व
खंवासोशुक्लंशुचिह्यखंडितम् ततःकुर्याद्धरेः पूजांमहापापंविनश्यति १९ संध्यामुपास्यविधिनातर्पयित्वापितॄन्सुरान् हरेर्मंदिरमागम्य
पूजयेत्कमलापतिं २० स्वर्णमाषकृतंदेवराधिकासहितंहरिं पार्वत्यासहितंदेवपूजयेद्विधिपूर्वकं २१ कुंभोपरिन्यसेद्देवंताम्रपात्रेथमृन्म
ये दिव्यवस्त्रसमायुक्ते दिव्यगंधानुवासिते २२ तस्योपरिन्यसेत्पात्रंताम्रंरौप्यंहिरण्मयं तस्मिन्संस्थापयेद्देवं विधिनापूजयेत्ततः
२३ संस्नाप्यसलिलैः श्रेष्ठैर्गंधधूपादिवासितैः चंदनागरुकर्पूरैः पूजयेद्देवमीश्वरं २४ नानाकुसुमकस्तूरीकुंकुमेनसिताब्ज
जैः तत्कालजातैः कुसुमैः पूजयेत्परमेश्वरं २५ नैवेद्यैर्विविधैः शक्त्यातथानीराजनादिभिः धूपैर्दीपैः सकर्पूरैः पूजयेत्के
शवंशिवं २६ नृत्यंगीतंतदग्रेतु कुर्याद्भक्तिपुरःसरं नालपेत्पतितान्पापान् तास्मिन्नहनिनस्पृशेत् २७ नानृतंहिंवदेद्वाक्यंसत्यंपूतंव
चोवदेत् रजस्वलांनपश्येत्तन निंदेद्ब्राम्हणगुरुं २८ पुराणंपुरतोविष्णोःशृणुयात्सहवैष्णवैः निर्जलासाप्रकर्तव्यायाचशुक्लेमलिम्लुचे
२९ जलपानेनवाकुर्याद्दुग्धाहारेणनान्यथा रात्रौजागरणंकुर्याद्गीतवादित्रसंयुतं ३० प्रथमेप्रहरेपूजानारीकेलार्धमुत्तमंद्वितीयेश्रीफलैश्चै
वतृतीयेबीजपूरकैः ३१ चतुर्थेपूजयेत्पूगैर्नारिंगैश्चविशेषतः प्रथमेप्रहरेपुण्यमग्निष्टोमस्यजायते ३२ द्वितीयेवाजपेयस्यतृतीयेहयमेधज
चतुर्थेराजसूयस्यजायतोजायतेफलं ३३ नातःपरतरंपुण्यंनातःपरतरामखाः नातःपरतरा विद्यानातःपरतरंतपः ३४ पृथिव्यायानि-

तीर्थानि पुण्यान्यायतनानि च तस्मात्तानि च दृष्टानि येनाकारि हरेर्व्रतम् ३५ एवं जागरणं कुर्याद्यावत्सूर्योदयो भवेत् सूर्योदये शुभे तीर्थे गत्वा स्ना
नं समाचरेत् ३६ स्नात्वैवागत्य भवने पूजयेद्देवमीश्वरम् पूर्वोदितेन विधिना भोजयेद्ब्राह्मणान् शुभान् ३७ कुंभादिकं च यत्सर्वं प्रतिमां केशव
स्य च पूजयित्वा विधानेन ब्राह्मणाय समर्पयेत् ३८ एवं व्रतं विधियो वै कुरुते भुवि मानवः सफलं जायते तस्य व्रतं मुक्तिफलप्रदं ३९ ॥ तन्न सर्वमा-
ख्यातं यत्पृष्टोहं त्वया नृप मलिम्लुचस्य मासस्य शुक्लाया विधिमुत्तमम् ४० पद्मिन्याः प्रीतियुक्तो यः कुरुते व्रतमुत्तमं व्रतानि तेन चीर्णानि स
र्वाणि नृपनंदन ४१ कृष्णा या मलमासस्य विधिस्तस्यापि तादृशः परमा सा तु विज्ञेया सर्वपापक्षयंकरी ४२ अत्र ते कथयिष्यामि कथामेकां
मनोरमाम् नारदाय पुलस्त्येन विस्तरेण निवेदिताम् ४३ कार्तवीर्येण कारायां निक्षिप्तं वीक्ष्य रावणम् विमोचितः पुलस्त्येन याचयित्वा
महीपतिं ४४ तदाश्चर्यं तदा श्रुत्वा नारदो दिव्यदर्शनः पप्रच्छ च यथा भक्त्या पुलस्त्यं मुनिपुंगवम् ४५ दशाननेन निर्विजिताः सर्वे देवाः सवासवाः
कार्तवीर्येण वै जितः कथं रणविजातयः ४६ नारदस्य वचः श्रुत्वा पुलस्त्यो मुनिरब्रवीत् शृणु वत्स प्रवक्ष्यामि कार्तवीर्यसमुद्भवम् ४७ पुरा त्रेताय
गे राजन् माहिष्मत्यां महत्तरः हैहयानां कुले जातः कृतवीर्यो महीपतिः ४८ सहस्रं प्रमदास्तस्य नृपस्य प्राणवल्लभाः न तासां तनयः कश्चि
द्भवेद्राज्यधुरंधरम् ४९ यजन्देवान् पितृन्सिद्धान् भिषक्चिकित्सान्महत्तरान् तेषां वाक्याद्व्रतं कुर्वन्न लब्धस्तनयस्तदा ५० सुतं विना न तदा राज्यं न
सुखाय महीपतेः क्षुधितस्य यथा भोगा न भवंति सुखप्रदाः ५१ विचार्य चित्ते नृपतिस्तपस्ताशुं मनो दधे तपसैव सदा सिद्धिर्लभ्यते मनसेप्सि
ता ५२ इत्युक्त्वासौ सभार्यश्च चीरवासा तदाधरः तपस्तप्तुं गतः सद्यो गृहं न्यस्य सुमंत्रिणं ५३ निर्गतं तं नृपतिं वीक्ष्य पद्मिनी प्रमदोत्तमा हरि

श्चंद्रस्यतनयाइक्ष्वाकुकुलसंभवा ५४ पतिव्रताप्रियंदृष्ट्वातपस्तप्तुंकृतोद्यमम् भूषणानिपरित्यज्यचीरमेकंसमाश्रयत् ५५ जगामपतिनासा
र्द्धंपर्वतेगंधमादने गत्वातत्रपपस्तेपेवर्षाणामयुतंनृपः ५६ नलेभेतनयंराज्येध्यायन्देवंगदाधरं अस्थिस्नायुमयंकांतंदृष्ट्वासाप्रमदोत्तमा ५७
अनुसूयांमहासाध्वींपप्रच्छविनयान्विता भर्तुःप्रतपतःसाध्विवर्षाणामयुतंगतं ५८ तथापिनप्रसन्नोभूत्केशवःकष्टनाशनः व्रतंमनम
हाभागेकथयस्वयथातथं ५९ येनप्रसन्नोभगवान्ममभक्त्याप्रजायते येनमेजायतेपुत्रश्चक्रवर्तीमहत्तरः ६० श्रुत्वातस्यास्तुवचनंपतिव्रतपरा
यणा यंप्रव्रजंतंनृपतिंस्वयंप्रव्राजदीक्षितं ६१ तदाप्रोवाचसंतुष्टापद्मिनींपद्मलोचनां स्नात्वामलिम्लुचेसुभ्रुमासद्वादशसंमितं ६२ द्वात्रिं-
शाद्दिनैश्चभवतिमासःपूर्णःशुभानने तन्मध्येद्वादशीयुग्मंपद्मिनीपरमातया ६३ उपोष्यतस्यकर्तव्यंविधिनाजागरैःसमं शीघ्रंप्रसन्नोभ
गवान्भविष्यतिसुखप्रदः ६४ इत्युक्त्वाकथयत्सर्वंमयापूर्वोदितंनृप विधिंव्रतस्यविधिवत्प्रसन्नाकर्दमांगजा ६५ श्रुत्वाव्रतविधिंसर्वंयथो
क्तमनुसूयया चक्रेराज्ञीचतत्सर्वंपुत्रप्राप्तिमभीप्सती ६६ एकादश्यांनिराहारासदाजाताचनिर्जला जागरेणयुतारात्रौगीतनृत्यसमन्वि
ता ६७ पूर्णेव्रतेचवैशीघ्रंप्रसन्नःकेशवःस्वयम् बभाषेगरुडारूढोवरंवरयशोभने ६८ श्रुत्वावाक्यंजगद्धातुःस्तुत्वाप्रीत्याशुविस्मिता य
याचेद्यवरंब्रूहिममभर्तुर्महत्तरं ६९ पद्मिन्यास्तद्वचःश्रुत्वाकृष्णःप्रीतःप्रियंवदां त्वयाहंतोषितोभद्रेप्रत्युवाचजनार्दनः ७० मलिम्लुचश्चमासो
सौनान्योमेप्रीतिदायकः तन्मध्यैकादशीरम्याममप्रीतिविवर्धना ७१ सात्वयोपोषितासुभ्रुयथोक्तविधिनाशुभे तेनत्वयाप्रसन्नोहंकृतो
स्मिसुभगानने ७२ तवभर्तुःप्रदास्यामिवरंयन्मनसेप्सितं इत्युक्त्वानृपतिंप्राहविष्णुर्विश्वार्तिनाशनः ७३ वरंवरयराजेंद्रयत्तेमन

सिकांक्षितं संतोषितोहं प्रिययातवसिद्धिचिकीर्षया ७४ श्रुत्वातद्वचनंविष्णोः प्रसन्नोनृपसत्तमः ववेसुतंमहाबाहुंसर्वलोकनमस्कृतं
७५ नदेवैर्मनुषैर्नागैर्दैत्यदानवराक्षसैः जेतुंशक्योजगन्नाथविनात्वांमधुसूदन ७६ इत्युक्तोबाढमित्युक्त्वातत्रैवांतरधीयत नृपोपिसुप्रस
न्नात्मान्हृष्टःपुष्टःप्रियायुतः ७७ समायात्स्वपुररम्यंनरनारीमनोरमं सपद्मिन्यांसुतंलेभेकार्तवीर्यंमहाबलं ७८ नतेनसदृशःकश्चित्त्रिषुलो
केषुमानवः तस्मात्सराज्ञितः संख्येरावणंदशकंधरः ७९ नतंजेतुंसमर्थोस्तित्रिषुलोकेषुकश्चन विनानारायणंदेवंचक्रपाणिंगदाधरम्
८० नत्वयाविस्मयःकार्योरावणस्यपराजये मलिम्लुचप्रसादेनपद्मिन्याश्चाप्युपोषणात् ८१ दत्तोदेवाधिदेवेनकार्तवीर्योमहाबलः इ
त्युक्त्वाप्रययौविप्रः प्रसन्नेनांतरात्मना ८२ श्रीकृष्णउवाच एतत्तेसर्वमाख्यातंयत्पृष्टोहंत्वयानघ मलिम्लुचस्यमासस्यशुक्लायाः
संभवोमहान् ८३ येकरिष्यंतिमनुजास्तेयास्यंतिहरेःपदं त्वमेवंकुरुराजेंद्रयदिचेष्टमभीप्ससि ८४ केशवस्यवचःश्रुत्वाधर्मराजोतिहृ
ष्टितः चक्रेव्रतंविधानेनबंधुभिःपरिवारितः ८५ सूतउ० एतत्तेसर्वमाख्यातंयत्पृष्टोहंपुराद्विज पुण्यंपवित्रंपरमंकिंभूयःश्रोतुमिच्छ
सि ८६ एवंविधंयेपिव्रतंमनुष्याभक्त्याकरिष्यंतिमलिम्लुचस्य उपोषितायेस्तुसुखप्रदावीयाशुक्लपक्षेभुवितेपिधन्याः ८७ श्रोष्यं
तियेतस्यविधिंसमग्रंतेप्यंशभाजोमनुजाःप्रशस्ताः येवैपठिष्यंतिकथांसमग्रांतेवैगमिष्यंतिहरेर्निवासं ८८ इतिअ० शुक्लैकादशीकथा
समाप्ता अथअधिककृष्णएकादशीकथा युधिष्ठिरउ० मलिम्लुचस्यमासस्यकृष्णाकाकथ्यतेविभो किन्नामकोविधिस्तस्याःक
थयस्वजगत्पते १ श्रीकृष्णउवाच परमेतिसमाख्यातापवित्रापापहारका भुक्तिमुक्तिप्रदानॄणांस्त्रीणांचापियुधिष्ठिर २ पूर्वो

स्कविधिनाकार्यायाकृष्णैकादशीजनैः पूजयेत्परयाभक्त्यानाम्नादेवंनरोत्तमम् ३ अत्रतेकथयिष्यामिकथामेतांमनोरमां कांपिल्यनगरेजातां
मुनीनामग्रतःसुताम् ४ आसीद्द्विजवरःकश्चित्सुमेधानामधार्मिकः तस्यपत्नीपवित्राख्यापातिव्रत्यपरायणा ५ कर्मणाकेनचिद्विप्रोध
नधान्यविवर्जितः नक्वापिलभतेभिक्षांयाचन्नपिनरान्बहून् ६ नभोज्यंलभतेताहङ्नवस्त्रंनैवमंडनम् रूपयौवनमाधुर्येनारीशुश्रूषतेप
तिं ७ अतिथिंपूजयेत्त्ववापितदासाक्षुधितागृहे तिष्ठत्यवशिलासाक्षीचाम्लानमुखपंकजा ८ विलोक्यभार्यांसुदतींकर्षतींसकलेवरं
नभर्तारंकश्चिद्वेवनास्त्यन्नमितिभाषते ९ विचार्यब्राह्मणश्चित्तेभार्यायाःप्रेमबंधनं निंदन्भाग्यंस्वकंविप्रःप्रोचेवाक्यंप्रियंवदां १० कांतेक
रोमिकिंकार्यंनमयालभ्यतेधनम् याचयामिनरान्भव्यान्नयच्छंतिचमेधनं ११ किंकरोमिकगच्छामित्वंमेकथयशोभने विनाधनेनस्व
श्रेणिगृहकार्यंनसिद्ध्यति १२ देहान्तांपरदेशायगच्छामिधनलब्धये यस्मिन्देशेचयत्प्राप्यंप्राप्यंतत्रैवलब्धये १३ उद्यमेनविनासिद्धिः
कर्मणानोपलभ्यते तस्माद्बुधाःप्रसंसंतिसर्वथैवशुभोद्यमम् १४ श्रुत्वाकांतस्यवचनंसासुनेत्राविचक्षणा प्रोवाचप्रांजलिर्भूत्वावि
नयानतकंधरा १५ तत्त्वोनास्तिसुविज्ञातात्वयात्तप्राब्रवीम्यहम् हितैषिणोनराब्रूयुःशश्वत्साधुत्वसाध्वपि १६ पूर्वदत्तंहिलभ्यंत
यत्रकुत्रमहीतले विनादानंनलभ्यंतमेरौकनकपर्वते १७ पूर्वदत्ताहियाविद्यापूर्वदत्तंहियद्धनम् पूर्वदत्ताहियाभूमिरिहजन्मनिल
भ्यते १८ यद्धात्रालिखितंभालेतत्तत्रैवहिलभ्यते विनादत्तेनकिंक्वापिलभ्यतेनैवकिंचन १९ पूर्वजन्मनिविप्रेंद्रनमयानत्वयाक्वचि
त् सत्पात्राणांकरेदत्तंस्वल्पंभूर्यपिसद्धनम् २० इहदेशेपरेवापिदत्तंसर्वत्रलभ्यते अन्नमात्रंतुविश्वेशोविनादत्तेनयच्छति २१

तस्मादत्रैवविप्राग्र्यस्थातव्यं भवतामया भवद्भिनानतिष्ठामिक्षणमात्रंमहामुने २२ नमातानपिताभ्रातानश्वश्रूःश्वशुरोजनः नसत्कु

स्वजनाश्चापरेकृतः २३ भर्तृहीनांविनिंदंतिदुर्भगेतिवदंतितां तस्मादत्रस्थिरीभूत्वाविहरस्वयथासुखं २४ भवतोभाग्ययोगेन

भविष्यति श्रुत्वातस्यास्तुवचनंस्थितस्तत्रविचक्षणः २५ तावत्तत्रसमायातःकौंडिण्योमुनिसत्तमः हृष्टासमागतंदृष्ट्वा

२६ सभार्यःसहसोत्थायनत्वामशिरसासकृत् धन्योस्म्यनुगृहीतोस्मिसफलंजीवितंमम २७ यदृष्टोसिमहद्भाग्यादित्युक्त्वा

सुविष्टरंतस्मैपूजयामासतंद्विजं २८ भोजयित्वाविधानेनपप्रच्छप्रमदोत्तमा विद्वन्केनप्रकारेणदारिद्र्यस्यक्षयोभवेत् २९ विनादर

द्यांकुटुंबिनीं मांमेभर्तापरित्यज्यगंतुकामोद्यवर्तते ३० अन्यदेशेपरान्लोकान् याचितुंपरपत्तने रक्षितोस्तिमयावि

रैः ३१ नादत्तंलभ्यतेकिंचिदित्युक्त्वासन्निवारितः ममभाग्यान्मुनींद्रायत्वमत्रैवसमागतः ३२ त्वत्प्रसादाद्दारिद्र्यंमेशीघ्रंनश्य

पापेनविप्रेंद्रदारिद्र्यंनश्यतिध्रुवम् ३३ कथयस्वकृपासिंधोव्रतंतीर्थंतपादिकं श्रुत्वातस्याःसुशीलायाभाषितंमुनिपुंगवः ३४

त्वेविचार्यव्रतमुत्तमं मलिम्लुचेमहाभागव्रतानामुत्तमंव्रतं सर्वपापौघशमनंदुःखदारिद्र्यनाशनं ३५ परमानामविख्या

मुत्तमा मलिम्लुचेतुयाकृष्णाभुक्तिमुक्तिफलप्रदा ३६ तस्यामुपोषणंकृत्वाधनधान्ययुतोभवेत् विधिनाजागरे

युतम् ३७ धनदेनपुराचीर्णंव्रतमेतत्सुशोभनं तदातुष्टेनरुद्रेणधनानामधिपःकृतः ३८ हरिश्चंद्रेणचकृतंपुराक्रीतस्

यातेनराज्यंनिहतकंटकं ३९ तस्मात्कुरुविशालाक्षित्वंतमेतत्सुशोभनम् विधिनाविधियुक्तेनसमंजागरणे

द्विधिंसर्वंकथयामासवाडवः प्रीत्यापरमसंतुष्टस्ततोभक्त्याप्रसादतः ४१ पुनः प्रोवाचतंविप्रंपंचरात्रव्रतंशुभं यस्य
मुक्तिश्चप्राप्यते ४२ परमादिवसेप्राप्तेः कृत्वापूर्वाण्हिकंविधिं कुर्यात्सुनियमान्भक्त्यापंचरात्रव्रतादरात् ४३ प्रातः स्ना
नंपंचकं सगच्छेद्वैष्णवस्थानंपितृमातृप्रियायुतः ४४ एकाशनस्तुयोभूयाद्दिनानांपंचकंनरः सर्वपापविनिर्मुक्तः सर्वलोक
योभोजयेद्विप्रंदिनानांपंचकंनरः भोजितंतेनविधिनासदेवासुरमानुषम् ४६ पूर्णंकुंभंसुतोयेनयोददातिद्विजातये दत्तं
सचराचरम् ४७ तिलपात्रंतुयोदद्याद्ब्राम्हणायविपश्चिते तिलसंख्यावसेत्स्वर्गेसनरोनाकमंडले ४८ घृतपात्रंतुयोदद्या
सभुक्त्वाविपुलान्भोगान्सूर्यलोकेमहीयते ४९ ब्रम्हचर्येणयस्तिष्ठेद्दिनानांपंचकंनरः सस्वर्गेभुंजते भोगान् स्ववंश्याभि
वंव्रतं विधसाध्वीकुरुत्वंपतिनाशुभे धनधान्ययुताभूत्वास्वर्गेयास्यातिसुव्रते ५१ इत्युक्त्वासाव्रतंचक्रेकौंडिन्ये
तीसमंभावयुतास्नात्वामासिमालिम्लुचे ५२ पंचरात्रव्रतेपूर्णेपरायाः प्रियसंयुता सापश्यद्राजभवनादायातंनृपनं
नवीनंभवनं दिव्यवस्तुसमन्वितम् वासयामासविधिनाविधिनाप्रेरितास्वयम् ५४ दत्वाग्रामंवृत्तिकरंब्राम्हणा
नस्तपसाराजासंस्तुत्वास्वगृहंययौ ५५ मलिम्लुचस्यमासस्यपरायाः परमादरात् कृष्णात्प्रपोषणात्सद्यः पंचरात्र
पापविनिर्मुक्तः सर्वसौख्यसमन्वितः भुक्त्वाभोगान्प्रियासार्धमंतेविष्णुपुरंययौ ५७ येकरिष्यंतिमनुजाः परायाव्रतमुत्तमम्
पुण्यंमयावक्तुंनशक्यते ५८ पुष्कराद्यानितीर्थानिगंगाद्याः सरितःस्तया धेनुमुख्यानिदानानितेनचीर्णानिसर्वथा

र्धंकृतंतेनपितरःपरितोषिताः व्रतानितेनचीर्णानिव्रतखंडोदितानिवै ६० द्विपदांब्राम्हणःश्रेष्ठोगोर्वरिष्ठाश्चतुष्पदां देवान
ष्टस्तथामासोमलिम्लुचः ६१ मलिम्लुचेपंचरात्रंमहापापहरंस्मृतं पंचरात्रेचपरमापाद्मिनीपापशोषिणी ६२ साप्यशक्तैःप्र
शक्त्याविचक्षणैः मानुषंजन्तुरासाद्यनस्नातोयैर्मलिम्लुचः ६३ तेजन्मघातिनोनूनंनोपोष्यंतिहरेर्दिनम् चतुराशीति
योनिसंकटे ६४ प्राप्यतेमानुषंजन्मदुर्लभंपुण्यसंचयैः तस्मात्कार्यंप्रयत्नेनपरमायाव्रतंशुभं ६५ श्रीकृष्णउवा
माख्यातंयत्पृष्टोहंत्वयानघ मलिम्लुचस्यमासस्यपरमायाःसमुद्भवम् ६६ तत्सर्वंतेसमाख्यातंशृणुष्वावहितोनृप ६७
नोदिनंमाहात्म्यंतच्चक्रेमनुजैःप्रियासमेतः भुक्त्वासौदिविभोविदुर्लभांश्च भोगान्नीतोसौसुरवरमंदिरंसुहृष्टः ६८
जामलिम्लुचस्यसुस्नाताःशुभविधिनाव्रतंचरंति तेभुक्त्वाभुविविभवंसुरेंद्रतुल्यंगच्छेयुस्त्रिभुवनवंदितस्यगेह
कमासकृष्णैकादशीपरमानाम्नीमाहात्म्यंसंपूर्णम् ७ श्रीलक्ष्मीनारायणार्पणमस्तु ७ श्रीराधाकृष्णार्पण

हें पुस्तक मुंबईंत सखाराम भिकशेट खातू यांणीं आपले ग्रंथप्रकाश छापखान्यांत छापिलें शके १८०५ माघशु

